# सूक्ष्मतायाम् ईश्वरः तिश्ठति

सूक्ष्मतायाः विभिन्नता ईश्वरस्य विभिन्नानाम् रूपाणाम् इव भवति

तमिल वास्तुकला तमिलायाः सभ्यतायाः रहस्यानाम् दर्शयति। सत्यम् अस्ति यत् तमिलनाडु प्रदेशस्य प्राचीन आलया अनेकानाम् सहस्रानाम् देवानाम् भिन्नानाम् द्रविड़-शैलीनाम् च द्रष्टव्यम् भवति। परम् एतत् सर्वम् अनुभवम् कर्तुम् अत्र आगन्तुम् अर्हति...। यात्रायाः सूक्ष्मतायाः विशयम् न तु विचारणीयम्। इदम् तु अस्माकम् विशयम् अस्ति।

embarking tamil nadu

experience yourself

सम्पर्क-स्थानम् : तमिलनाडु टूरिज्म, तमिलनाडु टूरिज्म कॉम्प्लेक्स, वालाजा रोड, चेन्नई - 600 002, भारत। दूरभाष संख्या 91-44-2538 3333, 2538 6867, 2538 4444
फैक्स संख्या 91-44-2536 1385 ई-मेल ttdc@vsnl.com वेबसाइट: tamilnadutourism.org



# सामरस्ययुक्तं जीवनम्



''तात ! अद्य वयं भारतीयस्य बष्टईपक्षिणः विषये ज्ञातवन्तः । अस्माकम् अध्यापकः अवदत् यत् विरलदृश्यः एषः इति'' अवदत् वीणा ।

''आं वत्से ! मानवस्य अत्याशा एव एतेषां महतीं दुरवस्थाम् अकल्पयत् । इदानीं राजस्थानीय-राष्ट्रोद्यानमात्रे ते द्रष्टुं शक्याः, न अन्यत्र'' इति अवदत् वीणायाः पिता ।

सः एव जीविनाशदशां विवृण्वन् पुनः अवदत् – ''वत्से ! एषा दुरवस्था न केवलायाः बष्टईपक्षिजातेः, अपि तु बहूनां प्राणिकुलानाम् अपि । १९६० तमे वर्षे अस्माकं देशे त्रिसहस्राधिकाः व्याघ्राः आसन् इति पशुगणनातः ज्ञायते । किन्तु ते इदानीं विरलाः जाताः । एशियाटिक्सिंहकुलीयाः त्रिशताधिकाः मारिताः मृगयाप्रियैः । इदानीं तादृशाः सिंहाः केचन एव गिर्-अभयारण्ये प्राप्यन्ते । भारते पूर्वं ये चित्रकाः सर्वत्र दृश्यन्ते स्म तेषां सन्ततिः अपि नष्टप्राया । लडाक्प्रदेशे हिममये पर्वतपरिसरे निवसन्तः हरिणाः अपि इदानीं विपत्तिदशाम् आपन्नाः सन्ति । प्रतिवर्षं विंशतिसहस्राधिकाः चर्मनिमित्तं मार्यन्ते । तेषां चर्मतः शाहतूष्नामकाः रङ्कवाः निर्मीयन्ते ।''

''अहो, घोरं दृश्यम् । एतस्य निवारणाय किं किमपि कर्तुं न शक्येत ?'' इति अपृच्छत् वीणा ।

''यत् प्रवर्तते तद्विषये अवधानं दातव्यम् इति तु प्रमुखः अंशः । व्याघ्रचर्मणा निर्मितानां वस्तूनां शाहतूषराङ्कवादीनां च विक्रयणं पूर्णतः निषेद्धव्यम् । एतादृशानां वस्तूनां क्रयणं जनैः निराकृतं चेत् विनाशदशां गतानां रक्षणं भवेत् । एतस्मिन् प्रपञ्चे मानवानाम् अस्माकं यथा, तथैव पशुपक्षिणाम् अपि जीवने अधिकारः अस्ति इति न विस्मर्तव्यम् अस्माभिः'' इति अवदत् वीणायाः पिता ।


**चन्दमामा** सम्पुटः - २२ डिसेम्बर् - २००५ सञ्चिका - १२



## अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः














**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, **CHENNAI - 600 097**
E.mail : subscription@chandamama.org



**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399
Fax: 044-22312447, Mobile: 98412-77347
email : advertisements @ chandamama.org
**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184
Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ* –
**चक्रपाणिः, बि. नागिरेड्डिः च**

# भविष्यतः सम्मुखीकरणाय स्यात् अस्मासु धैर्यम्

समग्रे जगति कश्चन भावः जागर्ति यत् भारतं शान्तिप्रियं शान्तिमयं च राष्ट्रम् इति । किन्तु दौर्भाग्यं नाम गते वर्षावधिके कालावधौ भारतेन आन्तरिकं बाह्यं च दौर्जन्यम् अनुभूतं, नैसर्गिकः विकोपः चापि सम्मुखीकृतः ।

महाराष्ट्रगुजरातादिषु राज्येषु प्रवाहपीडा जाता । पश्चिमवङ्गः, ओरिस्सा, आन्ध्रप्रदेशः, कर्णाटकम्, तमिळुनाडु इत्यादिषु अतिवृष्टिकारणतः सहस्रशः जनाः प्राणैः वियुक्ताः जाताः । वर्षस्य अन्तिमे भागे जम्मुकश्मीरप्रदेशे भूकम्पपीडा आपतिता, यत्र च महती प्राणहानिः प्रवृत्ता ।

यदा दीपावलीपर्वणः आचरणे जनता सज्जा आसीत् तदा राजधान्यां देहल्यां स्फोटकास्त्रस्फोटाः घटिताः । आत्महत्यादलीयैः कृतं दुष्कृत्यम् एतत् । एतस्य सर्वस्य दर्शनात् भासते यत् शान्तिमये देशे शान्तिः किं लुप्यमाना अस्ति इति ।

चन्द*मामा* सर्वदा स्मारयन्ती भवति यत् परिसरव्यवस्थायाः असमतोलनस्य निवारणार्थं सदा प्रयासः करणीयः इति । निरपराधानाम् उत्पीडनं यत् प्रचलति तदपि प्रबलतया खण्डयति चन्द*मामा* । परम्पराप्राप्तानां मानवीयमूल्यानां संरक्षणाय योग्याः उपायाः अवलम्बनीयाः इति वयं निवेदयामः भाविनीं जनताम् । जनैः आत्मनः, स्वदृष्टेः च परिवर्तनम् अवश्यं चिन्तनीयम् ।

उपसर्पत् नवं वर्षं भविष्यतः सम्मुखीकरणाय अपेक्षितं धैर्यं सत्प्रवृत्तिं च अस्मभ्यं ददातु इत्येतं भवतां सर्वेषां हृदये स्थितं सदाशयं सहोच्चारयति चन्द*मामा* अपि ।

*सम्पादकः* – **विश्रम्**

**Visit us at : http://www.chandamama.org**

वाचकानां कृते कथास्पर्धा - परिणामः (एप्रिल् - ०५)

# भूस्वामिनः परीक्षाकौशलम्



भूस्वामी पत्नीम् उक्तवान् - ''अहं मन्ये वसन्तः परिश्रमी सत्यवन् च इति । सः विश्वासयोग्यः अपि ।

यत्किमपि कार्यं सश्रद्धम्, एकाग्रचित्ततया, न्याय्येन, शुचिना मार्गेण च करोति सः । मम शङ्का आसीत् एव यत् वसन्ते इव वीरे अपि ते गुणाः न स्युः इति । अतः मया परीक्षा कृता । तस्मात् इदानीम् अहं गतशङ्कः अस्मि । कोषागारस्य रक्षके जागरूकता सत्यवादिता च अनिवार्या । अतः वसन्तस्य नियुक्तिः एव श्रेयसे इति मया निर्णीतम्'' इति ।

''वसन्तस्य गुणाः वीरस्य अवगुणाः च भवता कथम् अवगताः ?'' इति अपृच्छत् पत्नी ।

तदा भूस्वामी पुनः अवदत् - ''आदौ मया वीराय रक्षणकार्यं दत्तम् । तस्मिन् दिने मया गृहे निद्रितम् इत्यतः तेन रक्षणकार्यं कृतं न वेति न ज्ञातम् । अतः अनन्तरदिने तस्मै उद्यान-कार्यं दत्तं मया । वीरः उत्साहेन अश्रान्ततया च तत् कार्यम् अकरोत् । एतस्मात् स्पष्टम् अभवत् यत् वीरेण रात्रौ रक्षणकार्यम् उपेक्ष्य निद्रा कृता इति ।

वसन्तः तु रक्षणकार्यस्य अनन्तरदिने उद्यानकार्यकाले श्रान्तः निद्रालुः च दृष्टः । अतः मया अवगतं यत् वसन्तः सत्यवान्, सरलः, आदेशपालकः, अवञ्चकः च इति । एतस्मै रक्षणकार्यं दत्तं चेत् मम निश्चिन्तता भविष्यति, कोषागारं च सुरक्षितं स्थास्यति इति मया निर्णीतम्'' इति ।

पत्युः निर्णयकौशलं दृष्ट्वा नितरां सन्तुष्टा अभवत् भूस्वामिनः पत्नी । अतः सा तं बहुधा श्लाघितवती ।

कु ।। एन्. नमिता

२२/१, 'जननी', गोकुलं १ स्टेज्, २ फेस्, ३ मेन्, ७ 'सि' क्रास्

दिवानरपाल्य, बेङ्गलूरु - ५६० ०५४ कर्णाटकम्



# प्रवृत्तं तु हिताय

हेमपुरे दुर्गा नाम धनिका वसति स्म । रघुनाथः तस्याः एकमात्रपुत्रः । पत्युः मरणस्य अनन्तरं महत्या प्रीत्या तं पोषितवती आसीत् सा ।

यदा सः प्राप्तवयस्कः जातः तदा दुर्गा चिन्तितवती यत् पुत्रस्य विवाहः निर्वर्तनीयः इति । सुगन्धिपुरस्य निवासिनः नारायणस्य पुत्रीं सिन्धूरां दृष्ट्वा रघुनाथः प्रथमदर्शनेन एव तस्याम् अनुरक्तः जातः । सा सुन्दरी गुणवती च आसीत् ।

किन्तु नारायणः धनिकः न आसीत् । सः वरदक्षिणादाने असमर्थः । अतः एव एतं सम्बन्धं दुर्गा न इष्टवती ।

किन्तु रघुनाथः ताम् एव परिणेतुम् इच्छति । सः मातरम् अवदत् यत् यदि मया परिणीयेत तर्हि सिन्धूरा एव इति । किन्तु दुर्गा स्पष्टशब्दैः उक्तवती यत् एषः विवाहः कथमपि न सम्पत्स्यते इति । रघुनाथः मातुः विरोधं सोढुं न शक्नोति । मनस्तः सिन्धूराम् अपसारयितुम् अपि न शक्नोति सः ।

अथ कदाचित् नारायणस्य बन्धुः श्रीकरः दुर्गायाः गृहम् आगतवान् । सः स्वस्य परिचयादिकम् उक्त्वा दुर्गाम् अवदत् - ''आर्ये ! सिन्धूरायाः पिता मम आत्मीयः । तस्य कापि सम्पत्तिः नास्ति इत्यतः खलु भवती तस्य पुत्रीं स्नुषात्वेन स्वीकर्तुं न इच्छति ? अहं भवतीं किञ्चित् रहस्यं वदामि । सिन्धूरायाः कण्ठे यस्मिन् क्षणे मङ्गलसूत्रं धार्यते तत्समनन्तरम् एव सा विंशतिलक्षरूप्यकाणां स्वामिनी भविष्यति । अतः परिणयस्य अङ्गीकारः श्रेयसे एव'' इति ।

एतत् श्रुत्वा दुर्गा नितरां सन्तुष्टा । 'तस्याः जातके एतादृशं विशिष्टं फलं लिखितं स्यात्' इति अचिन्तयत् सा । अतः सा श्रीकरम् उक्तवती - ''भवान् सज्जनः अस्ति । भवतः वचने अहं विश्वासं करोमि । किन्तु यदि

वाचकानां कृते कथास्पर्धा - परिणामः (एप्रिल् - ०५)

# भूस्वामिनः परीक्षाकौशलम्



भूस्वामी पत्नीम् उक्तवान् - ''अहं मन्ये वसन्तः परिश्रमी सत्यवन् च इति । सः विश्वासयोग्यः अपि ।

यत्किमपि कार्यं सश्रद्धम्, एकाग्रचित्ततया, न्याय्येन, शुचिना मार्गेण च करोति सः । मम शङ्का आसीत् एव यत् वसन्ते इव वीरे अपि ते गुणाः न स्युः इति । अतः मया परीक्षा कृता । तस्मात् इदानीम् अहं गतशङ्कः अस्मि । कोषागारस्य रक्षके जागरूकता सत्यवादिता च अनिवार्या । अतः वसन्तस्य नियुक्तिः एव श्रेयसे इति मया निर्णीतम्'' इति ।

''वसन्तस्य गुणाः वीरस्य अवगुणाः च भवता कथम् अवगताः ?'' इति अपृच्छत् पत्नी ।

तदा भूस्वामी पुनः अवदत् - ''आदौ मया वीराय रक्षणकार्यं दत्तम् । तस्मिन् दिने मया गृहे निद्रितम् इत्यतः तेन रक्षणकार्यं कृतं न वेति न ज्ञातम् । अतः अनन्तरदिने तस्मै उद्यान-कार्यं दत्तं मया । वीरः उत्साहेन अश्रान्ततया च तत् कार्यम् अकरोत् । एतस्मात् स्पष्टम् अभवत् यत् वीरेण रात्रौ रक्षणकार्यम् उपेक्ष्य निद्रा कृता इति ।

वसन्तः तु रक्षणकार्यस्य अनन्तरदिने उद्यानकार्यकाले श्रान्तः निद्रालुः च दृष्टः । अतः मया अवगतं यत् वसन्तः सत्यवान्, सरलः, आदेशपालकः, अवञ्चकः च इति । एतस्मै रक्षणकार्यं दत्तं चेत् मम निश्चिन्तता भविष्यति, कोषागारं च सुरक्षितं स्थास्यति इति मया निर्णीतम्'' इति ।

पत्युः निर्णयकौशलं दृष्ट्वा नितरां सन्तुष्टा अभवत् भूस्वामिनः पत्नी । अतः सा तं बहुधा श्लाघितवती ।

कु ।। एन्. नमिता

२२/१, 'जननी', गोकुलं १ स्टेज्,२ फेस्, ३ मेन्, ७ 'सि' क्रास्

दिवानरपाल्य, बेङ्गलूरु - ५६० ०५४ कर्णाटकम्



# प्रवृत्तं तु हिताय

हेमपुरे दुर्गा नाम धनिका वसति स्म । रघुनाथः तस्याः एकमात्रपुत्रः । पत्युः मरणस्य अनन्तरं महत्या प्रीत्या तं पोषितवती आसीत् सा ।

यदा सः प्राप्तवयस्कः जातः तदा दुर्गा चिन्तितवती यत् पुत्रस्य विवाहः निर्वर्तनीयः इति । सुगन्धिपुरस्य निवासिनः नारायणस्य पुत्रीं सिन्धूरां दृष्ट्वा रघुनाथः प्रथमदर्शनेन एव तस्याम् अनुरक्तः जातः । सा सुन्दरी गुणवती च आसीत् ।

किन्तु नारायणः धनिकः न आसीत् । सः वरदक्षिणादाने असमर्थः । अतः एव एतं सम्बन्धं दुर्गा न इष्टवती ।

किन्तु रघुनाथः ताम् एव परिणेतुम् इच्छति । सः मातरम् अवदत् यत् यदि मया परिणीयेत तर्हि सिन्धूरा एव इति । किन्तु दुर्गा स्पष्टशब्दैः उक्तवती यत् एषः विवाहः कथमपि न सम्पत्स्यते इति । रघुनाथः मातुः विरोधं सोढुं न शक्नोति । मनस्तः सिन्धूराम् अपसारयितुम् अपि न शक्नोति सः ।

अथ कदाचित् नारायणस्य बन्धुः श्रीकरः दुर्गायाः गृहम् आगतवान् । सः स्वस्य परिचयादिकम् उक्त्वा दुर्गाम् अवदत् - ''आर्ये ! सिन्धूरायाः पिता मम आत्मीयः । तस्य कापि सम्पत्तिः नास्ति इत्यतः खलु भवती तस्य पुत्रीं स्नुषात्वेन स्वीकर्तुं न इच्छति ? अहं भवतीं किञ्चित् रहस्यं वदामि । सिन्धूरायाः कण्ठे यस्मिन् क्षणे मङ्गलसूत्रं धार्यते तत्समनन्तरम् एव सा विंशतिलक्षरूप्यकाणां स्वामिनी भविष्यति । अतः परिणयस्य अङ्गीकारः श्रेयसे एव'' इति ।

एतत् श्रुत्वा दुर्गा नितरां सन्तुष्टा । 'तस्याः जातके एतादृशं विशिष्टं फलं लिखितं स्यात्' इति अचिन्तयत् सा । अतः सा श्रीकरम् उक्तवती - ''भवान् सज्जनः अस्ति । भवतः वचने अहं विश्वासं करोमि । किन्तु यदि

भवतः कथनस्य अनुगुणं न प्रवर्तेत तर्हि अहं स्नुषां गृहात् निष्कासयेयम् अपि । एतत् स्मर्तव्यं भवता । नारायणः विवाहस्य सन्नाहस्य आरम्भं करोतु नाम'' इति ।

एतदनन्तरं पक्षाभ्यन्तरे एव सिन्धूराराघुनाथयोः विवाहः सवैभवं सम्पन्नः । एतत् दृष्ट्वा जनाः दुर्गायाः मनसः उदारतां बहुधा प्रशंसितवन्तः ।

नारायणः यथाशक्ति उपायनं दत्त्वा पुत्रीं पतिगृहं प्रति प्रेषितवान् । दुर्गायाः पुरतः तु विंशतिलक्षं रूप्यकाणि एव नृत्यन्ति स्म । अतः सा नारायणेन किं दत्तं, किं न दत्तम् इत्यपि न लक्षितवती ।

एवमेव मासः अतीतः । तथापि सिन्धूरया धनं किमपि न प्राप्तम् एव । अतः नितरां खिन्ना दुर्गा कदाचित् श्रीकरं सुगन्धिपुरतः आनायितवती । आगतं तं सा भर्त्सनस्वरेण उक्तवती – ''मङ्गलसूत्रधारणसमनन्तरम् एव मम स्नुषा विंशतिलक्षरूप्यकाणां स्वामिनी भविष्यति इति भवता उक्तम् आसीत् । किन्तु तया अद्यावधि एका वराटिका अपि न प्राप्ता । किम् एतत् ?'' इति ।

एतत् श्रुत्वा श्रीकरः हसन् अवदत् – ''मया युक्तम् एव उक्तम् अस्ति । विवाहानन्तरं सा भवत्याः गृहस्य सदस्या जाता । तदा गृहसम्पत्तेः कश्चन भागः तया अपि प्राप्तः एव खलु ? सा इदानीं निर्धनस्य नारायणस्य पुत्री न, अपि तु धनाढ्यायाः दुर्गावर्यायाः स्नुषा अस्ति । भवत्याः गृहस्य यत् ऐश्वर्यम् अस्ति तत्र तस्याः अपि भागः अस्ति एव । अतः विवाहसमनन्तरम् एव सा अपारस्य एव ऐश्वर्यस्य स्वामिनी जाता । मातृविहीनायाः तस्याः भवती एव माता'' इति ।

एतस्य श्रवणात् दुर्गा क्षणकालं स्तब्धा जाता । वस्तुतः श्रीकरस्य वचने असत्यं किमपि न आसीत् । 'धनाशया व्यवहृतवत्या मया योग्यः एव पाठः पठितः । इदानीं गृहम् आगतां स्नुषां यदि अहम् इतः प्रेषयेयं तर्हि मम पुत्रः अपि गृहात् निर्गच्छेत् । पुत्रः तु तस्याम् अनुरागवान् । सा गुणवती अपि । अतः हार्दभावेन तस्याः अङ्गीकारः एव वरम् । यत् प्रवृत्तं तत् हिताय इत्येव मन्तव्यम्' इति अचिन्तयत् सा । श्रीकरस्य चातुर्यं मनसि एव श्लाघितं तया ।





# कान्तस्य भाग्यम्

केशवपुरे कान्तनामकः कश्चन अनाथः निवसति स्म । बन्धुहीनः सः महता परिश्रमेण कार्यं करोति । सर्वेषु कार्येषु श्रद्धालुः सः सर्वेषां प्रशंसापात्रम् अभवत् । अस्य एतादृशं गुणं जानन् भूस्वामी कदाचित् तम् आहूय अवदत् - ''मम जामाता कामेशः नगरे निवसति । तेन भवादृशः श्रद्धवान् सहायकः अपेक्ष्यते । तत्र वेतनमपि अधिकमेव प्राप्तुं शक्यते । अतः भवतः नगरगमनम् उचितम् इति प्रतिभाति'' इति ।

कान्तः भूस्वामिनः वचनम् अङ्गीकृत्य ग्रामात् नगरं प्रति प्रस्थितः । नगरगमनाय मार्गे किञ्चन अरण्यं क्रमणीयम् आसीत् । अरण्ये गच्छन् कान्तः तत्र उपविष्टौ कौचन तरुणं तरुणीं च दृष्टवान् । तरुणस्य नाम माधवः, तरुण्याः च नाम वन्दना इति । सा माधवस्य भगिनी ! तौ उभौ अपि नगरं प्रति प्रस्थितौ । किन्तु मार्गायासेन परिश्रान्तौ तौ चलितुम् अशक्तौ सन्तौ अरण्यमध्ये एव उपविष्टौ आस्ताम् ।

रात्रौ अरण्ये वासः अपायकरः इति तौ जानीतः । तयोः अवस्थां कान्तः ज्ञातवान् । स्वस्य विषयं सर्वं वदन् कान्तः तयोः धैर्यम् उत्पादितवान् । ततः कान्तस्य साहाय्येन तौ अन्धकारप्रसारात् पूर्वमेव नगरं प्राप्तवन्तौ ।

नगरं प्रापय्य कान्तः यदा ततः प्रस्थातुम् उद्युक्तः तदा माधवः तस्मै दश रूप्यकाणि ददत् उक्तवान् - ''मान्य ! यदि भवता इदं धनं स्वीक्रियेत तर्हि मम महान् सन्तोषः भवेत्'' इति ।

किन्तु कान्तः तत् धनं स्वीकर्तुम् अनिच्छन् - ''एषा वन्दना मम भगिनी इव । मया तु भगिन्याः साहाय्यं कृतम् । न अन्यत् किमपि विशिष्टम्'' इति उक्तवान् ।

तदा माधवः उक्तवान् - ''अहं ज्यौतिषिकः अस्मि । अतः भवतः मुखदर्शनेन मया एतत्

भामहः



ज्ञातं यत् इतोऽपि कानिचन वर्षाणि आवयोः स्नेहः न वर्धिष्यते इति । किन्तु भवता कृतस्य साहाय्यस्य निमित्तं किमपि अदत्त्वा गमनम् अपि उचितं न मन्ये । अतः यत्किमपि स्वीकरोतु कृपया'' इति ।

कान्तः माधवात् एकं रूप्यकं स्वीकृत्य – ''भवान् यदि ज्यौतिषिकः तर्हि एतदेव एकं रूप्यकं स्वीकृत्य नगरे मम कीदृशी स्थितिः भवेत् इति वदतु'' इति उक्त्वा ततः स्वीकृतम् एव रूप्यकं तस्य हस्ते स्थापितवान् ।

माधवः कान्तस्य हस्तरेखाः दृष्ट्वा उक्तवान् – ''भवान् भाग्यशाली अस्ति । किन्तु भवतः भाग्यं तदा एव सफलं भवेत् यदा भवतः विवाहः सम्पद्येत, पतिः पत्नी च समाननामकौ सन्तौ परस्परं समानेन नाम्ना एव व्यवहरेतां च । यदि एतत् अशक्यम् इति भवता चिन्त्यते तर्हि अस्य अन्योऽपि उपायः अस्ति । भवतः अपत्यानि वा पूर्वोक्तं नियमं यदि पालयिष्यन्ति तर्हि अपि भवतः भाग्यं पुनः उत्कृष्टं भवेत् । अपि च एषः विषयः अन्यत्र कुत्रापि न वक्तव्यः । यदि कथ्येत तर्हि भाग्यात् वञ्चितः भविष्यति भवान्'' इति ।

तदा वन्दना उक्तवती – ''मम अग्रजस्य ज्यौतिषं कदापि वितथं न भविष्यति । भवान् भाग्यशाली यथा भवेत् तथा अहमपि यावच्छक्यं सहायतां करिष्यामि'' इति ।

ततः प्रस्थितः कान्तः कामेशस्य गृहं प्राप्तवान् । कामेशः सज्जनः । अतः अल्पे एव काले कान्तः कामेशस्य गृहस्य सर्वं दायित्वं स्वीकृतवान् । कान्तस्य स्वभावेन प्रभावितः कामेशः अपि तस्य विवाहं कारयितुम् उद्युक्तः । आश्चर्यस्य विषयः नाम वध्वाः नाम कान्ता इत्येव । अत एव कान्तः अपि एतं विवाहप्रस्तावम् अनुमतवान् । कामेशः नानाविधेषु स्वस्य वाणिज्येषु दैनन्दिनवस्तूनाम् आपणस्य दायित्वं कान्तस्य अधीनं कृतवान् । विवाहसमनन्तरं कान्तः अन्यस्मिन् गृहे वासम् आरब्धवान् । प्रथमदिने एव सः पत्नीम् उक्तवान् – ''आवयोः नाम समानम् अस्ति । अतः आवाम् उभौ अपि परस्परं नाम्ना एव व्यवहराव'' इति ।

तदा कान्ता – ''मम माता उक्तवती अस्ति यत् पत्युः नाम्नः कथनं पापकरम् इति । अतः तथा मास्तु'' इति उक्तवती ।

एवं कान्तस्य भाग्यं पुनः स्थगितम् अभवत् । गच्छत्सु वर्षेषु तस्य त्रीणि अपत्यानि जातानि । ज्येष्ठायाः नाम पद्मावती ।

द्वितीयस्य पुत्रस्य नाम कृष्णः इति । तृतीया बालिका जननसमनन्तरम् एव अनारोग्यपीडिता सती मरणोन्मुखी आसीत् । भूतवैद्येन उक्तम् – ''एतस्याः मरणम् आसन्नम् अस्ति । भगवान् भास्करः वरुणश्च कुपितौ स्तः । अतः एव भवतः भाग्यमपि न फलति । किन्तु मया कथ्यमानेन उपायेन अस्य निवारणं कर्तुं शक्यते । तयोः देवतयोः प्रथमम् अक्षरं संयोज्य बालिकायाः नाम भावा इति करोतु । तेन भवतः शुभं भविष्यति । बालिकायाः भविष्यं सुखमयं भविष्यति'' इति ।

कान्तः भूतवैद्यस्य सूचनां पालितवान् । कालक्रमेण बालिका अपि स्वस्था अभवत् । ज्येष्ठा पुत्री पद्मावती विवाहवयस्का जाता । पिता कान्तः पद्मनाभनामकेन सह तस्याः विवाहं कारितवान् । श्वशुरगृहं प्रति प्रेषणात् पूर्वं पुत्रीम् आहूय सः उक्तवान् – ''पुत्रि ! भवती पतिं पद्म इति नाम्ना आह्वयतु । सोऽपि भवतीं तथैव आह्वयतु । तेन भवतोः जीवनं सुखमयं भविष्यति'' इति ।

किन्तु कान्तेन यथा उक्तं तथा न अभवत् एव । यतः पद्मावत्याः श्वशुरः एतं व्यवहारं न इष्टवान् । अतः पद्मावती निरुपाया सती नाम्ना पत्युः आह्वानं न कृतवती एव । कान्तेन पुत्रस्य विवाहः यदा कृतः तदा अपि पुत्रस्नुषयोः परस्परसम्बोधनं नाम्ना न जातम् एव ।

पुत्री भावा भाग्यकारिणी भवेत् इत्यत्र कान्तस्य विश्वासः न आसीत् । अतः सः निश्चितवान् यत् भाग्यशालितां प्राप्तुं मम जीवने अवसरः नास्ति इति । तस्मात् तस्य हृदये महती निराशता प्रसृता ।



कान्तम् आपृच्छ्य गतौ माधवः वन्दना च नगरे कांश्चन मासान् स्थित्वा ततः अन्यदेशं गतवन्तौ । तत्र श्यामनामकेन वणिजा परिणीता जाता वन्दना । माधवश्च रमानामिकां वणिक्-पुत्रीं परिणीतवान् । विविधेषु वाणिज्येषु प्रवृत्तः सः अपारम् ऐश्वर्यं सम्पादितवान् ।

विंशतेः वर्षाणाम् अनन्तरं वन्दना भाव-नामकेन एकमात्रपुत्रेण सह स्वदेशम् आगत्य वासम् आरब्धवती । तस्याः पतिः श्यामः, माधवः चापि तत् नगरं प्रति आगमने मतिं कृतवन्तौ आस्ताम् ।

तत् नगरम् आगता वन्दना कान्तस्य विषये वार्तां सङ्गृह्य तस्य मेलनाय गता । परस्परं तौ अभिज्ञातवन्तौ । ततः वन्दना कान्तम् अवदत् – ''पूर्वं भवान् मां भगिनीं मत्त्वा साहाय्यं कृतवान् । परिचयं बान्धव्यरूपेण

परिणमयितुम् इदानीम् अवसरः प्राप्तः अस्ति । यदि मम पुत्रः भवतः पुत्र्याः परिणयम् अङ्गीकुर्यात् तर्हि अहं भवत्पुत्रीं स्नुषात्वेन स्वीकर्तुम् इच्छामि'' इति ।

एतं प्रस्तावं कान्तः अङ्गीकृतवान् । वधूवरौ परस्परदर्शनेन सन्तृप्तौ जातौ । उभौ अपि परिणये सहमतिं दर्शितवन्तौ । तदा वन्दना भावाम् अवदत् - ''अहं भवत्याः पितृभगिनी इव । अतः भवती पतिं नाम्ना निर्दिशतु'' इति । ततः सा पुत्रम् अपि सूचितवती - ''भवानपि पत्नीं नाम्ना एव निर्दिशतु'' इति ।

कान्तः एतया घटनया नितरां सन्तुष्टः । सः कृतज्ञतया वन्दनाम् अवदत् - ''भगिनि ! काले महत् साहाय्यं करिष्यते इति भवत्या उक्तम् आसीत् । तत् पालितं भवत्या । मम पुत्री जामाता च सदृशेन नाम्ना परस्परं सम्बोधयिष्यतः यत् तत् तु मम श्रेयसे'' इति ।

ततः विवाहः महता वैभवेन सम्पन्नः । तदनन्तरदिने एव कामेशः कान्तम् आहूय अवदत् - ''एतावत्पर्यन्तं भवता मम वाणिज्ये साहाय्यं कृतम् । इतः परं भवता स्वतन्त्रं वाणिज्यम् आरम्भणीयम् । यत् साहाय्यम् आवश्यकं तदहं दास्यामि'' इति ।

आपणः हस्तच्युतः भविष्यति इत्यतः कान्तः नितरां खिन्नः । 'माधवस्य भविष्यवचनं वितथम् एव' इति अचिन्तयत् सः ।

एतं विषयं ज्ञात्वा वन्दना तम् अवदत् - ''उद्योगी सर्वदा अपि अन्यस्य अधीनः एव भवति । स्वयं वाणिज्यम् आरब्धं चेत् भवान् स्वामी भविष्यति । यः स्वतन्त्रः भवति तस्य एव साहाय्यं करोति भाग्यम् अपि । मम पतिः, भ्राता चापि भवतः साहाय्यं करिष्यतः । अतः विना चिन्तां वाणिज्यस्य आरम्भं करोतु भवान् । साहसे श्रीः प्रतिवसति'' इति ।

कान्तः स्वस्य दोषम् अवगतवान् । अतः सः वन्दनाम् अवदत् - ''ज्योतिषं भविष्यस्य सूचकमात्रम् । मानवेन स्वस्य भविष्यं स्वयमेव निर्मातव्यम् । अतः अहं मम भाविजीवनम् उज्ज्वलं करिष्यामि स्वप्रयत्नेन । प्राप्तस्य अवसरस्य उपयोगः स्वीकरिष्यते एव मया'' इति ।

ततः कान्तः अल्पे एव काले स्वतन्त्रं वाणिज्यम् आरब्धवान् । वर्षाभ्यन्तरे सः नगरस्य प्रमुखेषु वणिक्षु अन्यतमः जातः ।





# भयङ्करः खातः

## २

*[ब्रह्मपुरसमीपे अरण्ये केशवः नाम कश्चन कृषिकबालः वसति स्म । चारणाय धेनुवृषभादीन् पर्वतसमीपं नीतवान् सः तत्र कश्चित् विचित्रं जन्तुं दृष्टवान् । तावता ब्रह्मपुरस्य सेनापतिः मृगयोद्देशेन तत्र आगतवान् । विलक्षणं जन्तुं दृष्टवान् सः भटौ आज्ञापितवान् यत् तं मत्समीपम् आनयताम् इति । तदनन्तरम् ...]*

सेनापतेः आज्ञां श्रुत्वा कश्चन भटः तस्य अपूर्वजन्तोः दिशि स्वस्य अश्वं वेगेन नीतवान्, तम् अपूर्वं जन्तुं सेनापतेः दिशि प्रेरितवान् च ।

सेनापतिः तं जन्तुं क्षणकालं परीक्षादृष्ट्या दृष्ट्वा अवदत् - ''एषः विलक्षणः जन्तुः अपूर्वः एव अस्ति । जगति प्रायः एतादृशः अपरः न स्यात् इति भाति । राज्ञे अहं यदि एतम् उपायनीकुर्यां तर्हि राजा निश्चयेन सन्तुष्टः भवेत्'' इति ।

ततः सः केशवं पश्यन् दर्पेण अवदत् - ''भवता एषः विचित्रः जन्तुः कुतः चोरितः ? देशे प्राप्यमाणाः अपूर्वाः पदार्थाः जीविनः च राज्ञः एव भवन्ति इति किं भवान् न जानाति ? एतद्विषये राजाज्ञा किं भवता न श्रुता ?'' इति ।

सेनापतेः वचनं श्रुत्वा केशवः नितरां कुपितः । तथापि सः स्वस्य कोपं न प्रकाशितवान् ।

सः सेनापतिम् अवदत् - ''श्रीमन् ! मया



जन्तुः एषः कुतश्चित् अपि न चोरितः । मम धेनुभिः सह तिष्ठन् एषः चरति । अहं तस्य विरोधं न करोमि । तं प्रीत्या पश्यामि । अहं तु न सुशिक्षितः । एतम् अरण्यप्रदेशम् अतिक्रम्य कुत्रापि न गतम् अपि मया । अतः राजाज्ञायाः श्रवणस्य भाग्यं न प्राप्तं मया'' इति ।

''अस्तु नाम । भवन्तम् औदार्येण क्षान्तवान् अस्मि । एतं रज्ज्वा बद्ध्वा नगरं प्रति आनयतु'' इति आज्ञाप्य सः स्वस्य अश्वम् अग्रे प्रेरितवान् ।

सैनिकः रज्ज्वा पाशं विरचय्य तं जन्तुं लक्ष्यीकृत्य क्षिप्तवान् । पाशः जन्तोः कण्ठे लग्नः । सैनिकः रज्जुम् आकृष्य बन्धं दृढीकृत्य रज्ज्वाः अपरम् अग्रं स्वस्य अश्वस्य खलीनेन सह बद्धवान् । ततः सेनापतिम् अनुसृत्य प्रस्थितवान् च ।

अपरः सैनिकः खड्गं हस्तेन गृहीत्वा तम् इतस्ततः चालयन् केशवसमीपम् आगत्य - ''भोः, मासानन्तरम् अहं पुनः अपि अत्र आगमिष्यामि । तस्मिन् अवसरे भवता अपरः विलक्षणः जन्तुः मह्यं दातव्यः । अन्यथा प्राणैः वियोगः प्राप्तव्यः भवेत् भवता'' इति दर्पेण उक्त्वा ततः निर्गतवान् ।

सेनापतेः सैनिकयोः च व्यवहारं दृष्ट्वा केशवः नितरां खिन्नः । सः एकं बाणं स्वीकृत्य धनुषि योजितवान् । तावता तस्य मनसि विचारः आगतः - 'शत्रुम् अपि लक्ष्यीकृत्य पृष्ठभागतः बाणस्य प्रयोगः अनुचितः' इति । अतः सः धनुषि योजितं बाणं पार्श्वे स्थापितवान् ।

सैनिकाभ्याम् आनीयमानं विलक्षणं जन्तुं पुनः पुनः पश्यन् अरण्यमार्गेण अग्रे गच्छन् सेनापतिः आनन्दसागरे निमग्नः, नितरां तृप्तः च आसीत् ।

'अहम् एतं जन्तुं राज्ञे दर्शयिष्यामि । एतस्य ग्रहणाय मया कीदृशं महत् साहसं करणीयम् अभवत् इति कल्पितघटनाम् राज्ञः पुरतः उपवर्णयिष्यामि । एतस्मात् सन्तुष्टः राजा मह्यं किमपि विशिष्टं पारितोषिकं दद्यात् एव । ...' इति बहुधा चिन्तयन् सः कल्पनालोके विहरन् आसीत् ।

'नगरे केनापि न ज्ञायेत यत् मया कस्माच्चित् कृषिकबालकात् विनायासम् एषः स्वायत्तीकृतः इति । अतः मया मम सैनिकौ आदौ स्मारणीयौ । अन्यथा मम योजना विफला भवेत्' इति चिन्तयन् सः सैनिकयोः बोधनाय गमनवेगं

किञ्चित् न्यूनीकृतवान् ।

तावता पृष्ठभागतः सैनिकस्य आक्रोशनं कथनं च तेन श्रुतम् - ''श्रीमन् ! एषः न अश्वः, अपि तु राक्षसः एव । एषः शृङ्गेण मम अश्वं प्रतुम्फ्य अमारयत् । माम् अपि मारयितुं प्रयतते एषः ! हा हन्त ! अहं मृतः !'' इति ।

सेनापतिः झटिति मुखं परिवर्त्य अपश्यत् । सैनिकात्, तदीयात् अश्वात् च रक्तधारा प्रवहन्ती दृष्टा तेन । अपरः सैनिकः अश्वात् अवतीर्य अश्वं तत्रैव परित्यज्य पलायने उद्युक्तः दृष्टः ।

एतत् दृष्ट्वा नितरां भीतः सेनापतिः ततः पलायनं यावत् चिन्तयन् आसीत् तावता जन्तुः वेगेन आगत्य तदीयस्य अश्वस्य उदरे स्वस्य शृङ्गं प्रावेशयत् । तस्मात् तदीयः अश्वः हेषारवं कुर्वन् भूमौ अपतत् । सेनापतिः आत्मरक्षणाय ततः कूर्दनम् अकरोत् । किन्तु तावता सः विलक्षणः जन्तुः शृङ्गेण तम् अपि अतुम्फत् एव ।

कर्तितः कदलीवृक्षः इव भूमौ पतितः सेनापतिः उच्चैः आक्रन्दनम् अकरोत् - ''हन्त, हा हन्त ! एषोऽहं मृतः भविष्यामि । रक्षन्तु, मां रक्षन्तु .. । एषः राक्षसाश्वः मां मारयति निश्चयेन । रक्ष्यताम्, रक्ष्यताम्'' इति ।

जलात् बहिः स्थापितः मत्स्यः इव सः अताम्यत् । अल्पे एव काले तस्य कायः निश्चलः जातः ।

एतत् दृष्ट्वा नितरां भीतः सः सैनिकः ''रक्ष्यताम्, रक्ष्यताम् । राक्षसाश्वतः रक्ष्यताम्'' इति आक्रोशनं कुर्वन् ब्रह्मपुरं प्रति अधावत् ।



राजमार्गे एवम् उच्चैः आक्रोशनं कुर्वन्तं धावन्तं तं दृष्ट्वा जनाः चिन्तितवन्तः यत् एतस्य मतिः भ्रष्टा जाता अस्ति इति ।

दुर्गद्वारसमीपं गत्वा सः तत्रत्यान् रक्षकभटान् सम्भ्रान्तिपूर्वकम् अवदत् - ''अस्माकं सेनापतिः मारितः जातः । अन्यः सैनिकः, तदीयः अश्वौ चापि मारितौ । सः एकशृङ्गी राक्षसाश्वः अत्रापि आगत्य अस्मान् सर्वान् खादिष्यति'' इति ।

तस्य वचनं श्रुत्वा दलपतिः कश्चन ततः गत्वा मन्त्रिणम् अवदत् - ''अयं कश्चन भ्रष्टमतिः इति भाति । एकशृङ्गी राक्षसाश्वः कश्चन अस्माकं सेनापतिं मारितवान् इति वदति सः'' इति ।

''तम् अत्र आनयतु नाम'' इति वदन् मन्त्री प्रकोष्ठात् बहिः आगतवान् ।

ततः भटैः सः सैनिकः मन्त्रिसमीपम् आनीतः । सैनिकः यदा द्वारसमीपे दृष्टः तदा मन्त्री तम् अवदत् - ''अये ! अलं भीत्या । अरण्ये यद्यत् प्रवृत्तं तत् सर्वं धैर्येण वदतु'' इति ।

सः सैनिकः क्षणकालं विश्रम्य अरण्ये केशवस्य मेलनं यत् जातं, विलक्षणः जन्तुः यः दृष्टः, तस्य ग्रहणं यत् कृतं, तेन जन्तुना सैनिकः सेनापतिः च कथं घातितः इत्यादिकं सर्वं विस्तरेण अवदत् ।

मन्त्री सर्वं श्रुत्वा क्षणकालं विचिन्त्य अपृच्छत् - ''एतत्सर्वं यदा प्रवर्तते स्म तदा किं भवान् तूष्णीम् आसीत् ? भवता किं कोऽपि प्रतिरोधः न कृतः एव ? कीदृशः सैनिकः भवान् !'' इति ।

''सर्वं तु क्षणाभ्यन्तरे प्रवृत्तम् । अतः मम प्रतिरोधः अकिञ्चित्करः आसीत् । सः जन्तुः मम मारणाय अपि यावत् दृष्टिक्षेपम् अकरोत् तावता अहम् अश्वात् उत्कूर्द्य वार्तानिवेदनाय कथञ्चित् पलाय्य आगतः'' इति विवृतवान् सैनिकः ।

''भवता सेनापतेः मरणं प्रत्यक्षं न दृष्टम् । एवं ननु ?'' इति पुनः अपृच्छत् मन्त्री ।

''नैव । तथापि मन्त्री मृतः इति तु निश्चितम् ।'हा मृतोऽस्मि' इति तस्य आक्रन्दनं श्रुतम् अस्ति मया'' इति अवदत् सैनिकः ।

''सः राक्षसः किं घोराकारः ? तस्य औन्नत्यं कियत् स्यात् ?'' इति कुतूहलेन पृष्टवान् मन्त्री ।

''न सः घोराकारः, विशालकायः वा । अश्वात् अल्पः, गर्दभात् अपि स्थूलः दृश्यते सः । तस्य शिरसि एकं शृङ्गं दृश्यते । दर्शन-मात्रेण भासते यत् सः कश्चन सामान्यः जन्तुः इति । वयं तं रज्ज्वा बद्ध्वा किञ्चिद्दूरम् आनीतवन्तः अपि विशेषक्लेशं विना । किन्तु अल्पे एव काले आकस्मिकतया .... ''



इति वदन् सः सैनिकः प्रवृत्तं स्मरन् भीत्या निर्वचनः जातः ।

सैनिकस्य भीतिं दृष्ट्वा मन्त्री अवदत् - ''भवान् अरण्ये विषफलं किमपि खादितवान् स्यात् इति भाति । सेनापतिः मृतः एव स्यात् चेदपि तस्य कारणं भवदुक्तं न स्यात् इति भाति । भवता यादृशः जन्तुः वर्ण्यते सः लोके अश्रुतपूर्वः । अतः तादृशः भवितुं न अर्हति एव । भवता उल्लिखितः सः केशव-नामकः बालः बाणप्रयोगनिपुणः खलु ? सः एव सेनापतिं मारितवान् स्यात् कदाचित् । सः विलक्षणः जन्तुः तस्य पशुभिः सह आसीत् खलु ? वस्तुस्थितेः ज्ञानाय कांश्चन सैनिकान् अहम् अरण्यं प्रति प्रेषयिष्यामि । भवान् तेभ्यः मार्गं दर्शयतु'' इति ।



''यथाज्ञापयति भवान्'' इति विनयेन नमस्कृत्य अवदत् सः । अरण्यशब्दश्रवणेन भीतिकारणतः तस्य शरीरे यद्यपि पुनरपि भीतिः उत्पन्ना, तथापि असहायः आसीत् सः ।

मन्त्री दलपतिम् आहूय आज्ञापितवान् - 'अरण्यं गत्वा सेनापतेः का दशा इति ज्ञात्वा आगन्तव्यं भवता । शक्यं चेत् सः केशव-नामकः बालः अत्र आनेतव्यः अपि । अहं तस्य मुखात् एव प्रवृत्तं सर्वं ज्ञातुम् इच्छामि'' इति ।

अत्रान्तरे सेनापतेः मरणस्य वार्ता राजधान्यां सर्वत्र प्रसृता आसीत् । तस्य विविधानि कारणानि स्वमत्यनुगुणं कल्प्यन्ते स्म अपि जनैः ।

राजमार्गे आक्रन्दनपूर्वकं गच्छतः सैनिकस्य कथनं बहुभिः जनैः श्रुतम् आसीत् एव । विलक्षणस्य जन्तोः सद्भावः, तस्य एकशृङ्गिता चापि तैः श्रुता आसीत् । 'सः मृगयार्थम् अरण्यं गतं सेनापतिम् उन्नीय आकाशं प्रति उड्डीय गतः' इति केचन जनाः परस्परम् अवदन् ।

नगरं प्रति क्षीरविक्रयणाय गतः केशवस्य पिता एतत् सर्वं श्रुतवान् ।

रात्रौ केशवः अपूर्वजन्तोः विषये यत् उक्त-वान् आसीत् तत्सर्वं स्मृतं तेन । 'यः सेनापतिम् एव अमारयत् सः किं बालकं केशवं न मारयेत् ?' इति चिन्तयतः वृद्धस्य मनसि आतङ्कः आरब्धः ।

यदा चिन्ता अधिका जाता तदा सः ततः प्रस्थितवान् एव ।

यदा नगरस्य अन्तिमः भागः प्राप्तः तदा

तेन विलक्षणा वार्ता श्रुता । शत्रुदेशीयः गुप्तचरः कश्चन पशुचारणव्याजेन देशं प्रविश्य सेनापतिं तत्सहचरान् च मारितवान् अस्ति, तं सजीवं ग्रहीतुं मन्त्री कांश्चन भटान् अरण्यं प्रति प्रेषितवान् अस्ति, ते इदानीम् अरण्यं प्रति गच्छन्तः सन्ति इति ।

एतत् श्रुत्वा सः कृषिकः चिन्तितवान् यत् मम पुत्रस्य काचित् आपत् उपस्थिता अस्ति इति ।

'विचित्रः जन्तुः तं यदि एतावता अपि न मारितवान् स्यात् तर्हि मन्त्रिणा प्रेषिताः सैनिकाः तं गुप्तचरं मत्वा अवश्यं मारयिष्यन्ति । अतः मया तत्र गत्वा तत्रत्या स्थितिः परिशीलनीया । पुत्रम् उद्दिश्य जागरूकतावचनं वक्तव्यं च' इति अचिन्तयत् सः ।

सः वेगेन कुटीरसमीपम् आगतः । सः प्रदेशः निश्शब्दः आसीत् । केशवः तत्र न आसीत् ।

किमपि निश्चित्य सः वृद्धः परम्पराप्राप्तं खड्गं भित्तितः स्वीकृत्य तं प्रदेशं गतवान्, यत्र च पुत्रः धेनूः चारयन् आसीत् ।

केशवः कस्यचित् वृक्षस्य अधः उपविष्टः आसीत् । एतत् दृष्टवतः वृद्धस्य मनः निश्चिन्तं जातम् । सः धावन् केशवस्य समीपं गत्वा अवदत् - ''केशव ! भवान् सजीवं द्रष्टुं शक्यः वा न वा इति मम चिन्ता आसीत् । नगरे विविधाः किंवदन्त्यः श्रूयन्ते । किं प्रवर्तते अत्र ?'' इति ।

केशवः यथापूर्वं वृक्षस्य अधः उपविष्टः आसीत् । सेनापतिविषये तस्य क्रोधः इतोऽपि शान्तः न आसीत् । पितुः मुखे भीतिं, हस्ते खड्गं च दृष्ट्वा सः नितराम् आश्चर्यचकितः । नगरे श्रूयमाणानां किंवदन्तीनां कारणं न ज्ञातं तेन ।

सः पितरम् अपृच्छत् - ''भवतः हस्ते खड्गः किमर्थम् ? नगरे कीदृश्यः किंवदन्त्यः श्रूयन्ते ?'' इति ।

''सेनापतिं सैनिकान् च कश्चन विलक्षणः जन्तुः मारितवान् अस्ति इति श्रूयते । केचन तु वदन्ति यत् शत्रुदेशीयः गुप्तचरः कश्चन अस्माकं देशम् आगत्य रहसि सञ्चरन् कथमपि अवसरं प्राप्य तान् मारितवान् इति'' इति भीतिमिश्रितेन स्वरेण अवदत् वृद्धः ।

-*(अनुवर्तते)*



## वेताल-कथा

# धर्मासनम्

त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः सः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवतः निरन्तरपरिश्रमं दृष्टवतः मम सन्देहः यत् भवान् राजा अस्ति, उत सामान्यः कर्मकरः कश्चन इति । राजा तु शासनकार्ये मतिं कुर्यात्, प्रजाहितं चिन्तयेत्, देशस्य रक्षणविषये अवधानवान् भवेत् च । न कदाचिदपि सः एवं स्वकर्तव्यं विस्मृत्य कर्मकरवत् परिश्रमं कुर्यात् । भवतः एतस्य परिश्रमस्य किं रहस्यम् इति अहं सर्वथा न अवगच्छामि । किं महिमयुक्तस्य कस्यचन वस्तुनः प्राप्त्यै भवता एवं कठोरः परिश्रमः क्रियते ?



तादृशं महिमान्वितं वस्तु प्राप्तं चेदपि तस्य उपयोगार्थं विवेकः आवश्यकः एव, यश्च भवति न्यूनतया दृश्यते । भवता अपि नवीनवर्मणा इव मूर्खता न आचरणीया, यश्च हस्तगतम् अपि महिमान्वितं वस्तु परित्यक्तवान् । अतः भवतः मार्गायासस्य परिहाराय तदीयां कथां विस्तरेण श्रावयामि इदानीम् । तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

प्रणवगिरेः युवराजः नवीनवर्मा विवेचनशर्मनामकस्य गुरोः सकाशात् विद्याः अधिगृहीतवान् ।

विद्याभ्याससमाप्तेः अनन्तरं गुरुः तम् आशिषा अनुगृह्य – ''वत्स ! गुरुकुले वसता भवता योग्येन क्रमेण विद्याभ्यासः कृतः । तस्मात् अहं सन्तुष्टः अस्मि । अचिरात् एव भवान् प्रणवगिरेः सिंहासनम् आरोक्ष्यति । राज्ञा शासनावसरे विविधाः समस्याः सम्मुखीकरणीयाः भवन्ति । न्यायनिर्णयावसरे तदीया बुद्धिमत्ता व्यवहारज्ञानं चैव उपकरोति । यदा इतिकर्तव्यतामूढता आगच्छति तदा साहाय्यम् इच्छति राजा सहजतया । किन्तु मन्त्रिणः अपि योग्यं साहाय्यं दातुम् असमर्थाः एव भवन्ति कदाचित् । अतः भवतः उपकाराय अहम् एकं ताम्रासनं दास्यामि । तत् तु महिमान्वितम् । यदा अपरिहार्या समस्या उपस्थिता भवति तदा समस्यासम्बद्धं जनं भवान् एतस्मिन् आसने उपवेशयतु । तदा समस्यापरिहारमार्गः भवता स्वयं ज्ञायते । यदा एतस्य आवश्यकता भवतः न भवति तदा तु एतत् गुरुकुलं प्रति प्रेषयतु'' इति उक्त्वा एकं ताम्रासनं तस्मै दत्तवान् ।

नवीनवर्मा तेन ताम्रासनेन सह राजधानीं प्रतिगतवान् । अल्पे एव काले तदीयः पिता तस्य पट्टाभिषेकं निर्वर्त्य तस्मै शासनभारम् अर्पितवान् ।

राजा नवीनवर्मा स्वस्य सिंहासनस्य पार्श्वे एव गुरुणा दत्तं तत् महिमान्वितं ताम्रासनं स्थापितवान् । योग्येन क्रमेण राज्यशासनम् आरब्धं तेन । उत्तमराजत्वेन कीर्तिः अपि तेन प्राप्ता ।

कदाचित् सेनापतिः धीरमल्लः वीरबाहुनामकं लुण्ठाकं बन्धिनं कृत्वा राज्ञः पुरतः उपस्थापितवान् । वीरबाहुः आ बहुभ्यः वर्षेभ्यः धनिकानां लुण्ठने मग्नः आसीत् । तं ग्रहीतुं न शक्तम् आसीत् रक्षकभटैः । तादृशः लुण्ठाकः प्राप्तः इत्यतः राजा सन्तुष्टः । किन्तु केन

दण्डेन एषः दण्डनीयः इति राज्ञा बहुधा चिन्तनेन अपि न ज्ञातम् ।

अतः सः भटान् आज्ञापितवान् यत् एतं ताम्रासने उपवेशयन्तु इति ।

वीरबाहुः यदा सिंहासने उपविष्टः तदा ध्वनिः श्रुतः - ''एषः महालुण्ठाकः अस्ति । आजीवनकारागारवासः एव एतस्य उचितः दण्डः'' इति ।

तावता गुप्तचरप्रमुखः तत्र उपस्थाय राजानं विनयेन प्रणम्य - ''महाराज ! वीरबाहुना बहूनां धनिकानां लुण्ठनं कृतम् इति तु सत्यं, किन्तु तेन कस्यापि हननं तु न कृतम् । ये अन्याय्येन धनं सम्पादितवन्तः आसन् तेषाम् एव लुण्ठनं कृतं तेन । सामान्यानां तु लुण्ठनं कदापि न कृतम् । अन्यच्च, लुण्ठनेन यत् धनं प्राप्तं तत् समग्रं तेन दरिद्रेभ्यः वितीर्णम्'' इति उक्त्वा स्वस्य कथनस्य पोषणाय एकं विस्तृतं पत्रम् अपि महाराजस्य पुरतः उपस्थापितवान् ।

पत्रं समग्रतया पठित्वा राजा चिन्तने मग्नः जातः । क्षणकालं विचिन्त्य सः सभासदः पश्यन् दृढस्वरेण अवदत् - ''एतम् अहं भ्रष्टाचारनिरोधविभागस्य मुख्यं कृतवान् अस्मि'' इति ।

राज्ञः निर्णयं श्रुत्वा सभ्याः सर्वे क्षणकालं स्तब्धाः । वीरबाहुः शिरः अवनमय्य राजानं प्रणम्य अवदत् - ''महाराज ! मम निष्कपटताम् अभिज्ञाय भवता यत् कार्यं मह्यम् अर्पितं तत् तु निष्ठया करिष्यामि । भवन्तं च कृतज्ञतापूर्वकं स्मरामि'' इति ।

एतदनन्तरं कदाचित् राज्ञः जन्मदिनम् आगतम् । तदवसरे विविधाः मनोरञ्जनकार्य-





क्रमाः आयोजिताः । युद्धविद्यासु स्पर्धाः अपि आयोजिताः । मल्लयुद्धे खड्गयुद्धे च विजेतुः नाम घोषितम् । किन्तु धनुर्युद्धे तथा कर्तुं न शक्तम् । यतः तत्र उभौ तरुणौ समान-सामर्थ्यवन्तौ दृष्टौ । पुरस्कारः तु एकस्मै एव दीयते । अतः वृक्षस्य उन्नतायां शाखायां काचित् पाञ्चालिका उत्तोलिता । उभौ अपि सूचितौ यत् तां लक्ष्यीकृत्य बाणः प्रयोक्तव्यः इति । उभौ अपि लक्ष्यभेदनं कृतवन्तौ एव । तयोः अन्यतरः राजबन्धुः विजयः । अपरः भिल्ल-युवकः भैरवः ।

एतस्यां स्पर्धायां विजेता कः इति निर्णेतुम् अशक्तः राजा निर्णयाय ताम्रासनस्य साहाय्यस्य स्वीकारे मतिं कृतवान् ।

आदौ विजयः ताम्रासने उपवेशितः । तस्य उपवेशनस्य अनन्तरं तत् ताम्रासनं निर्णयम् अश्रावयत् यत् धनुर्विद्यायां विजेता एषः अभिनन्द्यते इति ।

सभायां स्थिताः सर्वे करताडनेन विजयं सहर्षम् अभिनन्दितवन्तः ।

राजा नवीनवर्मा भैरवम् असूचयत् यत् भवान् अपि ताम्रासने उपविशतु इति । राज्ञः एषा सूचना सर्वेषु आश्चर्यम् अजनयत् । जनाः न ज्ञातवन्तः यत् धर्मासनम् एतादृशे प्रसङ्गे कीदृशं निर्णयं श्रावयेत् इति ।

भैरवम् अपि ताम्रासने उपवेशनाय आदिशतः राज्ञः आशयः कः इति अजानन्तः ते मौनेन स्थितवन्तः ।

भैरवेण यदा उपविष्टं तदा अपि ताम्रासनात् स्वरः श्रुतः – धनुर्विद्यायां विजेता एषः अभि-नन्द्यते इति ।

विजयित्वेन उभयोः अभिनन्दनं ताम्रासनेन यत् कृतं तत् दृष्ट्वा जनाः आश्चर्यम् अनुभूत-वन्तः ।

किन्तु राजा नवीनवर्मा तु मन्दहासपूर्वकं शिरः अचालयत्, भैरवमेव विजयित्वेन अघोषयत् च ।

ततः सः सेनाध्यक्षम् उद्दिश्य अवदत् – ''श्वः प्रातः एव एतत् ताम्रासनं विवेचनशर्मणः गुरुकुलं प्रापयतु'' इति ।

बेतालः एवं कथां समाप्य अवदत् – ''राजन् ! तत् ताम्रासनं महिमान्वितम् इत्यत्र सन्देहः एव नास्ति । किन्तु राजा लुण्ठाकस्य वीरबाहोः विषये तस्य आसनस्य निर्णयम् उपेक्ष्य वीरबाहुं भ्रष्टाचारनिर्मूलनविभागस्य अध्यक्षं कृतवान् । किम् एतत् उचितम् ? धनुर्विद्यायां विजयः भैरवश्चापि समानौ इति तु धर्मासनस्य

निर्णयः । तथापि राजा किमर्थं भैरवम् एव विजयिनम् अघोषयत् ? किम् एतत् अनुचितं न ? महिमान्वितस्य तस्य धर्मासनस्य प्रत्यर्पणेन नवीनवर्मा किं महत् अनौचित्यं न आचरितवान् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''गुरुणा दत्तं धर्मासनं महिमान्वितम् इति तु सत्यम् एव, किन्तु तत् परिमितसामर्थ्योपेतम् । एतत् राजा जानाति स्म । वीरबाहुविषये धर्मासनस्य निर्णयः न पालितः यत् तस्य प्रमुखं कारणं - गुप्तचरप्रमुखेण प्रदर्शितं पत्रम् । तत्र विवृतम् आसीत् यत् वीरबाहुः भ्रष्टाचाराणां विषये सिंहः, दरिद्राणां कृते भगवान् च इति । तस्य जीवने स्वार्थस्य लेपः कोऽपि न आसीत् । अतः राजा तं भ्रष्टाचारनिर्मूलनविभागस्य प्रमुखम् अकरोत् । एतत् तु राज्ञः परिशीलनशक्तेः द्योतकम् अस्ति ।

धनुर्विद्याविषये धर्मासनेन यः निर्णयः श्रावितः सः तु प्रशस्तः न आसीत् । उभयोः अपि सामर्थ्यमात्रं परिशीलितं तेन । तयोः पूर्वापरं न मनसि स्थापितम् एव, यच्च निर्णयप्रक्रियायां मुख्यं भवति । विजयः राजवंशीयः, भैरवश्च भिल्लवंशजः । शास्त्रीयशिक्षणं प्राप्तुं भैरवस्य कोऽपि अवसरः न आसीत् । तथापि तेन तादृशम् अपूर्वं कौशलं प्रदर्शितम् । अतः एव राजा तं विजयिनम् अघोषयत् । धर्माधर्मनिर्णयः सूक्ष्मः भवति । तत्र मानवमस्तिष्कम् एव नितराम् उपकारकम् । बाह्यं साधनं तत्र अकिञ्चित्करम् । स्वस्य व्यवहारज्ञानविषये, विवेकविषये च पूर्णः विश्वासः आसीत् राज्ञः । अतः एव सः विना विवेचनं धर्मासनस्य निर्णयं न अङ्गीकृतवान् । धर्मासनं निर्णयावसरे बाह्यं मुखमात्रं पश्यति इति ज्ञातवान् राजा समग्रं चिन्तनं विना क्रियमाणः निर्णयः अनुचितः एव भवति इति निर्णीय गुरवे धर्मासनस्य प्रत्यर्पणे मतिं जकृतवान् । तस्य व्यवहारे अनुचितता अविवेकिता वा कापि नास्ति'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः विजयगर्वेण ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



*अन्यदेशीया जानपदकथा (जपानीया)*

# गगनस्पर्शिनी नासिका

जपानदेशे मुख्ये भूभागे कश्चन सरोवरः अस्ति । 'सरोवराः सर्वत्र भवन्ति एव बहवः । किं वा वैशिष्ट्यम् अत्र ?' इति साधिक्षेपं वदेयुः भवन्तः । वस्तुतः सरोवरस्य नास्ति किमपि वैशिष्ट्यम् । विशिष्टता तु तत्र निवसतां मत्स्यानाम् । तेषां नासिका सुदीर्घा भवति । तत् तु एवं सम्पन्नम् -

प्राचीने काले सरोवरपरिसरे कश्चन आनक-वादकः आसीत् । सः समीपस्थेषु ग्रामेषु विवाहादिषु उत्सवेषु आनकं वादयति स्म । सः नितरां निर्धनः । कदाचित् भूकम्पकारणतः तदीयः कुटीरः पतितः जातः । अन्यस्य कुटीरस्य निर्माणाय तत्समीपे धनं न आसीत् । अतः सः सरोवरसमीपे स्थितायां कस्याञ्चित् गुहायां वासम् आरब्धवान् । दिनानि गतानि । तस्य वार्धक्यम् अपि प्रवृद्धम् । तस्मात् सः उदरपूरणाय यावत् आवश्यकं तावत् धनं सम्पादयितुम् अपि अशक्तः जातः । तस्य एतां दुरवस्थां दृष्ट्वा खिन्नाः ग्रामीणाः काले काले तदीयां गुहां प्रति आहारं प्रेषयन्ति स्म ।



यस्मिन् दिने तदीयं मरणम् आसन्नं तस्मिन् दिने आहारदानाय कश्चन बालः तत्र गतः आसीत् । बालेन आनीतः आहारः कष्टेन एव सेवितः वृद्धेन । ततः सः तं बालम् अवदत् - ''वत्स ! भवतः साहाय्येन अहं नितराम् उपकृतः अस्मि । अत्र मम आनकः अस्ति । तद्विषये मम प्रीतिः अधिका । अतः तेन कश्चन वरः दत्तः अस्ति । कस्यचित् नासिकां दृष्ट्वा 'वर्धताम्, वर्धताम्' इति उक्त्वा एषः वादितः चेत् तदीया नासिका वर्धिष्यते । 'हीयताम्, हीयताम्' इति उक्त्वा वाद्यं वादितं चेत् नासिका ह्रस्वा भविष्यति । लोके तादृशाः बहवः सन्ति, ये च मुखानुगुणम् अस्थितायाः नासिकायाः विषये असन्तुष्टाः सन्ति । अतः भवान् एतत् स्वीकृत्य एतस्य आधारेण सुखेन जीवतु । किन्तु एतदत्र स्मर्तव्यं यत् कुतूहलमात्रवशात् कदापि एतत् न उपयोक्तव्यम्

इति । मम मरणस्य अनन्तरम् उत्तरक्रिया भवता एव करणीया'' इति ।

" ततः अल्पे एव काले वृद्धः मृतः । बालः ग्रामीणानां साहाय्येन वृद्धस्य उत्तरक्रियादिकं यथाविधि निर्वर्तितवान् । अनन्तरं तेन आनकस्य उपयोगः आरब्धः ।



तत्प्रदेशस्य भूस्वामिनः पुत्र्याः नासिका लघ्वी आसीत् । तां पश्यन् बालः वाद्यं वादयन् अवदत् - 'वर्धतां, वर्धताम्' इति । प्रवृद्धा भूस्वामिपुत्र्याः नासिका तस्याः मुखशोभाम् अवर्धयत् । एतस्मात् दिनाभ्यन्तरे एव तस्य बालस्य कीर्तिः सर्वत्र प्रसृता । बहवः जनाः नासिकायाः वर्धनाय ह्रस्वीकरणाय च तत्समीपम् आगताः । अनुरूपां नासिकां प्राप्य सन्तुष्टाः ते तस्मै बालाय धनादिकं दत्तवन्तः ।

गतेषु केषुचित् वर्षेषु तारुण्यं प्राप्तवान् सः धनाढ्यः अपि जातः । कदाचित् सरोवरतीरे स्थितस्य तस्य मनसि विचारः आगतः यत् एतस्य आनकस्य सम्पूर्णं सामर्थ्यं मया परीक्षणीयम् एव इति । अतः सः ऊर्ध्वमुखतया शयानः स्वनासिकां पश्यन् आनकं वादयन् अवदत् - 'वर्धतां, वर्धताम्' इति । नासिकायाः वृद्धिः आरब्धा । सन्तुष्टः सः वाद्यं वेगेन वादयन् पुनः पुनः अवदत् - 'वर्धतां, वर्धताम्' इति । वर्धमाना नासिका वेणुदण्डः इव जाता । पुनरपि वर्धमाना सा मेघान् अस्पृशत् ।

आकाशे डयमानौ उभौ गृध्रौ विलक्षणां तां नासिकाम् आकाशे दृष्ट्वा नितराम् आश्चर्यचकितौ । कुतूहलवशात् कश्चन गृध्रः ताम् अदशत् । मृदुताम् अनुभूय सः तां बलात् आकर्षत् । तस्मात् भूमौ शयानेन तरुणेन वेदना अनुभूता । अतः सः अवदत् 'हीयतां, हीयताम्' इति । तदा नासिकायाः ह्रासः आरब्धः । गृध्रः आत्मना प्राप्तम् उपरि नेतुम् इच्छति स्म । अतः सः स्वस्य ग्रहणं शिथिलं न अकरोत् । 'हीयतां, हीयताम्' इति कथनात् नासिका ह्रस्वतां गता, तरुणः च क्रमेण ऊर्ध्वोर्ध्वं नीतः जातः च । यदा सः गृध्रस्य अतिसमीपं गतः तदा क्रुद्धः भीतः च गृध्रः तं बलात् अपातयत् । एषः वाद्यवादकः तरुणः सरोवरे अपतत् ।

अनन्तरक्षणे एव सः मत्स्यरूपेण परिवृत्तः । किन्तु मत्स्यस्य नासिका तु दीर्घा आसीत् । 'कुतूहलकारणतः एतस्य उपयोगः न करणीयः' इति वृद्धेन यत् ज्ञापितम् आसीत् तत् उपेक्षमाणः एषः तरुणः विलक्षणं फलं प्राप्तवान् आसीत् ।

# वार्ताविशेषः

## नूतनः शिवदेवालयः



गते शिवरात्रिदिने वाराणस्यां रुद्रेश्वर-महादेवस्य नूतने देवालये पूजा आरब्धा । एतस्य मन्दिरस्य वैशिष्ट्यं नाम एतदर्थं व्ययितस्य भूयान् भागः कयाचित् मुस्लिम्महिलया दत्तः । तस्याः नाम अस्ति नूर् फातिमा इति । वृत्त्या न्यायवादिनी सा । गते वर्षे तया स्वप्नः दृष्टः यत् गङ्गेशपुरे देवालयः निर्मातव्यः इति । अनन्तरदिनतः सा एतदर्थं धनसञ्चयम् आरब्धवती । यदा मन्दिरनिर्माणम् आरब्धं तदा विविधाभ्यः दिग्भ्यः धनसाहाय्यम् आगतम् । धार्मिकाः नायकाः, आध्यात्मिकसंस्थाः, अनेके भक्ताः च धनं दत्तवन्तः । धनं दत्तवत्सु मुस्लिम्जनाः, मुस्लिम्संस्थाः चापि सन्ति ।



## प्राचीनः वटवृक्षः

आन्ध्रप्रदेशसर्वकारेण 'तिम्मम्मा मारि मनु' नामकस्य वृक्षस्य संरक्षणाय १० लक्षं रूप्यकाणि व्ययीकर्तुं सङ्कल्पितम् अस्ति । एषः ५५० वर्षेभ्यः पूर्वम् उत्पन्नः वटवृक्षः । अनन्तपुरजनपदे 'गुडिबयलु'ग्रामे अस्ति सः । १९८९ तमे वर्षे एतस्य वृक्षस्य नाम गिन्नीसुपुस्तके सन्निवेशितम् । तिम्मम्मानामिका काचित् एतं वृक्षं सम्प्रार्थ्य पत्युः प्राणान् रक्षितवती इत्यतः एतस्य वृक्षस्य नाम कृतं 'गुडिबयलुतिम्मम्मावृक्षः' इति । राज्यस्य सर्वेषु कोणेषु स्थिताः महिलाः आकर्षति एषः वृक्षः आवर्षम् । १.२ हेक्टेर्प्रदेशे एषः प्रसृतः अस्ति । १२०० जटाः सन्ति एतस्य ।



# गृहपरिसरे प्रीतिः

अन्नपूर्णा षष्टिवर्षीया वृद्धा । एतस्मिन् पश्चिमे वयसि तया पतिवियोगः प्राप्तः । एतदनन्तरं कानिचन दिनानि तस्याः गृहं प्रति बन्धूनां गमनागमनं प्रवृत्तम् । अतः अन्नपूर्णया विशेषतः नीरसता न अनुभूता तदा । किन्तु बान्धवानां गमनागमनं यदा न्यूनं जातं तदा तया कष्टम् अनुभूतम् ।

तस्याः पुत्री जामाता च नगरे वसतः स्म । जामातुः तु वाणिज्यं वृत्तिः । अतः जामातृ-पुत्र्योः आगमनम् अपि विरलतया एव भवति स्म । तस्मात् एकाकिता विशेषतः बाधते स्म अन्नपूर्णाम् ।

कदाचित् गृहकार्याणि समाप्य सा गृहात् बहिः वृक्षस्य अधः कटं प्रसार्य शयनं कृतवती आसीत् । तदवसरे कश्चन मयूरः अकस्मात् तत्र उपस्थितः ।

अन्नपूर्णा मयूरम् अपश्यत् । मयूरस्य पादे व्रणः दृष्टः तया । कोऽपि एतं मारयितुं प्रयासं कृतवान् स्यात् इति सा अवगतवती । अतः सा झटिति उत्थाय मयूरं गृहस्य अन्तः नीत्वा वस्त्रपट्टिकया तस्य व्रणस्थलं बद्धवती ।

अत्रान्तरे कश्चित् गृहस्य पुरतः स्थित्वा उच्चस्वरेण अपृच्छत् – "आर्ये ! किम् अत्र कोऽपि मयूरः आगतः ? किं सः दृष्टः भवत्या ?" इति ।

गृहात् बहिः आगत्य अन्नपूर्णा अवदत् – "न खलु कोऽपि मयूरः दृष्टः मया ! अत्र कुतः आगच्छेत् मयूरः ?" इति ।

सः मनुष्यः अग्रे किमपि अवदन् ततः निर्गतवान् । अन्नपूर्णा ततः प्रतिदिनम् अपि मयूरस्य पादस्य व्रणस्य चिकित्सां कृतवती । समये आहारं यच्छन्ती सा तं पुत्रवत् प्रीत्या पालितवती । तस्मात् सन्तुष्टः मयूरः तत्रैव अवसत् । कदाचित् सः पिञ्छं प्रसार्य नृत्यति स्म अपि ।

एतां वार्तां ज्ञातवान् भूस्वामी कदाचित् अन्नपूर्णायाः गृहम् आगत्य अवदत् – "आर्ये ! कश्चन मयूरः पालनीयः इति ममापि महती



इच्छा । महता प्रयत्नेनापि मया कोऽपि मयूरः न प्राप्तः । मया श्रुतं यत् भवत्या गृहे कश्चन मयूरः पालितः इति । कृपया एतं भवती मह्यं ददातु । अहं भवत्यै प्रभूतानि सुवर्णनाणकानि दास्यामि'' इति ।

एतत् श्रुत्वा अन्नपूर्णा उक्तवती - ''किम् एतत् उच्यते भवता भूस्वामिवर्य ! एषः मयूरः मम पुत्रः इव । एतं विना न अहं जीवितुम् अर्हामि, न वा मां विना एषः जीवितुम् अर्हति । अतः एतस्य मयूरस्य दानस्य प्रस्तावः सर्वथा दूरापास्तः'' इति ।

''भवतु नाम'' इति उक्त्वा गतः भूस्वामी सप्ताहचतुष्टयस्य अनन्तरं पुनः आगत्य अवदत् - ''आर्ये ! भवती एकाकिनी अत्र वसति । यदा भवती अन्यत्र गच्छेत् तदा एतं को वा पालयेत् ? मम गृहे यदि एषः भवेत् तर्हि न एषा समस्या उद्भवेत् । यतः मम गृहे बहवः जनाः भवन्ति'' इति ।

अन्नपूर्णा क्षणकालं विचिन्त्य अवदत् - ''बान्धवानां गृहं गन्तव्यम् इति ममापि इच्छा भवति स्म कदाचित् । किन्तु इदानीं तु मयूरस्य सहवासतः तादृशी इच्छा विलुप्ता एव अस्ति । अतः अन्यत्र गतं चेत् एतस्य मयूरस्य का गतिः भवेत् इति समस्या एव न उद्भवति'' इति ।

तस्याः मयूरप्रीतिः भूस्वामिनि आश्चर्यम् अजनयत् । सः तां पुनः अवदत् - ''एवं तर्हि मयूरः भवती च मम गृहे वसताम् । तदा मया भवत्या चापि मयूरसहवासः प्राप्यते । यदा इच्छा भवति तदा भवती अत्र प्रत्यागन्तुम् अर्हति एव'' इति ।

भूस्वामिनः निमन्त्रणं तस्यां किञ्चित् आशाम् अजनयत् । अनन्तरक्षणे एव तया स्वस्य गृहं, गृहपरिसरः, तत्रत्याः तरु-लतादयः, परिसरस्य शान्तता इत्यादयः स्मृताः । अतः सा भूस्वामिनं किमपि न उक्तवती एव ।

तदा भूस्वामी पुनः अवदत् - ''मम गृहं प्रति आगतं चेत् भवत्याः योगक्षेमव्यवस्था उत्तमा भवेत् । भवत्याः स्वातन्त्र्यस्यापि च्युतिः न भविष्यति तत्र । भवत्याः गृहस्य रक्षणादि-कार्यम् अहं ग्रामाधिकारिणे समर्पयिष्यामि । इतः यः आयः भवेत् तमपि सः भवत्यै एव दास्यति'' इति ।

''एते सर्वे अंशाः युक्ताः एव सन्ति । तथापि...'' इति अर्धोक्त्या कथनं स्थगित-वती वृद्धा ।

''भवती किमपि वक्तुम् इच्छति इति

भाति । निस्सङ्कोचं वदतु तावत्'' इति अवदत् भूस्वामी ।

''किम् अभिप्रायस्य गोपनेन ? प्रतिदिनं भोजनं कृत्वा अहं वृक्षस्य अधः कटं प्रसार्य स्वपिमि । तदा पर्णानां सञ्चारात् यः मर्मरध्वनिः श्रूयते सः किम् अन्यत्र लभ्येत ? अत्र या शब्दैः वर्णयितुम् अशक्या परमा शान्तिः प्राप्यते किं सा इतरत्र प्राप्येत ?'' इति अवदत् वृद्धा ।

एतत् श्रुत्वा भूस्वामी अवदत् - ''एतस्मिन् गृहे परिसरे च भवत्याः प्रीतिः अपूर्वा । अतः अन्यत्र भवत्याः नयनम् अनुचितं स्यात् । अत्र हरिन्मयता वर्धताम् । तदर्थम् अहं वृक्षादीनां वर्धनाय व्यवस्थां करिष्यामि । मयूरस्य दर्शनस्य इच्छा यदा प्रबला भवति तदा अहमेव अत्र आगमिष्यामि । भवती अत्रैव वसतु'' इति ।

ततः भूस्वामी तत्र विविधानां वृक्षाणाम् आरोपणस्य व्यवस्थां कृतवान् । तस्मात् तत्र एकं वनं निर्मितं जातम् ।

अथ कदाचित् अन्नपूर्णा धान्यैः बीजपूरेण च युक्तां स्थालिकां मयूरस्य पुरतः प्रीत्या स्थापयित्वा यावत् प्रतिगन्तुम् उद्युक्ता तावता तया कश्चन स्वरः श्रुतः - ''अम्ब ! मया अन्नं शाकः च इष्यते'' इति ।

अन्नपूर्णा परिवृत्य दृष्टवती । तत्र मन्दहास-पूर्वकं स्थितः कश्चन दशवर्षीयः बालः तया दृष्टः । तस्य दर्शनात् तया महत् आश्चर्यम् अनुभूतम् ।

क्षणकालानन्तरं तत्र कुत्रापि मयूरम् अदृष्ट्वा सा कोपमिश्रितेन स्वरेण अपृच्छत् - ''अये



बालक ! मम मयूरः क्व ? तस्य का गतिः जाता ? सः मम पुत्रः इव इति किं भवान् जानाति ?'' इति ।

तदा बालकः हसन् - ''अहम् एव भवत्या पालितः सः पुत्रः । भवत्याः प्रेम्णः अनुकम्पस्य च कारणतः मया मुनिशापात् प्राप्तात् मयूर-जन्मतः मुक्तिः प्राप्ता । अत्र प्रमाणं - मम पादे दृश्यमानः व्रणकिणः, यत्र च भवत्या वस्त्रपट्टिका बद्धा आसीत्'' इति वदन् पादस्थं व्रणकिणम् अदर्शयत् ।

तस्य दर्शनात् वृद्धा अवगतवती यत् अयं बालः सत्यम् एव वदति इति । सा तं बालं स्वसमीपम् आकृष्य प्रीत्या आलिङ्ग्य अवदत् - ''वत्स ! मुनयः शापदाने अनुग्रहे च समर्थाः भवन्ति इति बाल्ये मया श्रुतम् आसीत् । कः मुनिः भवते शापं दत्तवान् ? तस्य कारणं किम् ?'' इति ।

''अम्ब ! सा च काचित् दीर्घा कथा । महती बुभुक्षा बाधते माम् । अतः तां संक्षेपेण वदामि । मम मातापितरौ कौ इति अहं न जानामि । भूपालः नाम कश्चन कृषिकः मां पोषितवान् । अन्यैः बालैः सह अहं गोचारणाय ग्रामात् बहिः गच्छामि स्म । तत्र विविधाः जन्तवः दृश्यन्ते स्म । अहं तु मयूरं विशेषतः इच्छामि स्म । कदाचित् कश्चन मयूरः दृष्टः मया । सः ग्रहीतव्यः इति इच्छा मयि उत्पन्ना । किन्तु तस्य ग्रहणं सुकरं न आसीत् । तं लक्ष्यीकृत्य अहं पाषाणान् क्षिप्तवान् । मया एवं क्षिप्तः कश्चन शिलाखण्डः समीपे एव तपस्यतः कस्यचित् मुनेः उपरि पतितः । तस्मात् क्रुद्धः मुनिः अशपत् यत् भवान् मयूररूपतां प्राप्नोतु इति । मम प्रार्थनातः सः शापविमुक्तेः मार्गम् अपि असूचयत् - सर्वेषु जीविषु परिसरे च यस्य प्रीतिः अधिका तस्य सहायतः भवता शापात् विमुक्तिः प्राप्यते इति । इदानीं भवत्याः कारणतः मया शापविमुक्तिः प्राप्ता अस्ति'' इति ।

अन्नपूर्णा महान्तं सन्तोषम् अनुभवन्ती तस्मै भोजनं परिवेषितवती । भोजनसमये सा अवदत् - ''वत्स ! एतस्य प्रदेशस्य भूस्वामी मयूरे विशेषप्रीतिमान् । सः भवन्तं स्वगृहे पालयितुम् इच्छति स्म । तस्य अनुग्रहात् एव मम गृहस्य परिसरः हरिन्मयः जातः अस्ति । विविधाः पशुपक्षिणः अत्र सन्ति तस्य कारणात् एव । किं भवान् तस्य किमपि साहाय्यं कर्तुं शक्नुयात् ?'' इति ।

बालकः एतं प्रस्तावम् अङ्गीकुर्वन् अवदत् - ''अहं मयूररूपेण दीर्घकालं यावत् आसम् । अतः कांश्चन मयूरान् अत्र वासाय आह्वातुं शक्नुयाम्'' इति ।

''तथैव भवतु । बहवः मयूराः अत्र दृष्टाः चेत् भूस्वामी नितरां सन्तुष्टः भवेत्'' इति अवदत् अन्नपूर्णा ।

भोजनानन्तरं बालः गृहस्य पृष्ठभागं गत्वा मुखेन मयूरध्वनिं कृतवान् । तस्य श्रवणात् उत्तरभागतः केचन मयूराः तत्र आगताः । ते तत्र एव वासम् आरब्धवन्तः ।

अल्पे एव काले स च प्रदेशः मयूराणां वासभूमिः जाता ।

एतत् दृष्ट्वा अन्नपूर्णा भूस्वामी च नितरां सन्तुष्टौ जातौ ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् -**



चक्रधरः श्रीपुरवासी कृपणः कश्चित् । जनानां पीडने तस्य विशेषरुचिः । अविवाहितः सः स्वीये प्राचीने गृहे एकाकितया निवसति स्म । कदाचित् अस्वास्थ्यं प्राप्य सः दिवं गतः ।

सः पिशाचरूपं प्राप्य तस्मिन् गृहे वासम् आरब्धवान् । जनाः यद्यपि तं न दृष्टवन्तः, तथापि मध्यरात्रादिषु तस्य विकृतध्वनिं तु शृण्वन्ति स्म एव ।

ततः केषाञ्चित् मासानाम् अनन्तरं रामः नाम कश्चन निर्धनः तत् रिक्तं गृहं गतवान् वासाय । चक्रधरपिशाचः स्वस्य गृहे अन्यस्य वासं न इच्छति स्म । अतः सः रामस्य पीडनम् आरब्धवान् । रामः यदा गृहे भवति तदा गृहस्य उपरि पाषाणाः पतन्ति स्म ।

रात्रौ अपि विविधाः पीडाः अनुभूयन्ते स्म रामेण । किन्तु एतस्मात् रामः न भीतः । 'गृहं मया न परित्यक्तव्यम्' इति सङ्कल्पितवान् सः । किञ्चित्कालं प्रतीक्षा कृता चेत् पिशाचपीडा स्वयं निवृत्ता भवेत् इति चिन्तनम् आसीत् तस्य । किन्तु तथा तु न प्रवृत्तम् । पिशाचस्य व्यवहारः मम लाभाय यथा स्यात् तथा करणीयम् इति अचिन्तयत् रामः ।

स्वकल्पनया एतस्याः कथायाः पूर्तिं १००-१५० शब्दैः कृत्वा पिहितपत्रस्य उपरि **'Story contest'** इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् ।

**अन्तिमः दिनाङ्कः - ३१, डिसेम्बर् - २००५**

नाम ---------------------------- वयः ---------- जन्मदिनाङ्कः ------------

विद्यालयः ---------------------------------------- कक्ष्या ------------

गृहसङ्केतः------------------------------------------------------------

----------------------------------------------------------------------

-----------------------------------Pincode ------------------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

## गुजरातराज्यीया जानपदकथा

# श्रेष्ठः कः ? तुच्छश्च कः ?

आहवपुरनामके ग्रामे पूर्वं कश्चन निर्धनः ब्राह्मणः निवसति स्म । सः सर्वथा अशिक्षितः । कुत्रापि उद्योगं प्राप्तुम् अशक्तः सः भिक्षावृत्त्या जीवनं यापयति स्म । प्रतिदिनं गृहं गृहं गत्वा याचनां कृत्वा प्राप्तं तण्डुलादिकं सङ्गृह्य पत्न्यै यच्छति स्म । पत्नी तेन पाकं करोति स्म । कदाचित् गृहे कृतः पाकः पुत्राणाम् उदरपूरणाय अपि अपर्याप्तं भवति स्म । तादृशे दिने जलम् एव तयोः पतिपत्न्योः आहारः ।

बहुषु दिनेषु एकेनैव भोजनेन गृहजनैः सर्वैः तृप्तैः भवितव्यं भवति स्म । अतः कदाचित् पत्नी लक्ष्मीः पतिम् अवदत् - ''भवान् यावत् सम्पादयति तावत् गृहजनानाम् अस्माकम् एकस्य भोजनस्य निमित्तम् अपि पर्याप्तं न भवति । अतः जीवननिर्वहणाय अन्यस्यापि मार्गस्य अन्वेषणं वरम्'' इति ।



''लक्ष्मि ! भवत्या यत् उच्यते तत् सत्यमेव इति अहं जानामि । किन्तु किं करवाणि, मार्गान्तरं मम पुरतः नास्ति । भवती कमपि उपायं जानाति चेत् वदतु'' इति अवदत् निर्धनः ।

लक्ष्मीः क्षणकालं विचिन्त्य अवदत् - ''भवता कुतो वा राजा न द्रष्टव्यः ? स तु करुणाशाली इति श्रूयते । याचितः सः किमपि दद्यात् एव'' इति ।

''अस्तु तावत् । श्वः एव अहं तं द्रक्ष्यामि । किन्तु दर्शनावसरे किमिति आशीर्वादं कुर्याम् ?'' इति अपृच्छत् निर्धनः ।

''तद्विषये चिन्ता किमर्थम् ? तस्मिन् समये यत् वचनं स्फुरति तत् उच्यताम्'' इति असूचयत् लक्ष्मीः ।

अनन्तरदिने प्रातः एव निर्धनः राजधानीं प्रति प्रस्थितवान् । राजानं दृष्ट्वा सः स्वस्य स्थितिं निवेदितवान् । सर्वं श्रुत्वा राजा तम् अपृच्छत् - ''मया किं दातव्यम् इति इच्छति भवान् ?'' इति ।

''महाप्रभो ! यथा इच्छा तथा दीयताम् । महाप्रभुणा भवता कथं व्यवहरणीयम् इति पामरः अहं कथं वा वदेयम् ? अहं सर्वथा निर्धनः इत्येतत् तु पुनः स्मारयितुम् अर्हामि'' इति उक्त्वा सः पुनरपि अवदत् - ''श्रेष्ठं सदा श्रेष्ठम् एव । तुच्छं तु सर्वदा तुच्छम् एव भवति'' इति ।

राजा मन्दहासं प्रकटयन् कागदखण्डे किमपि विलिख्य तत् कागदखण्डं निर्धनाय दत्त्वा अवदत् - ''एतत् नीत्वा कोषाध्यक्षाय दीयताम्'' इति ।

निर्धनः प्रासादस्य द्वारस्य समीपे स्थितं कोषागारं गत्वा तत्र कोषाध्यक्षाय तं कागदखण्डं दत्तवान् । कोषाध्यक्षः तं प्राप्य विना प्रतिवचनम् एकं रजतनाणकं दत्तवान् तस्मै निर्धनाय ।

निर्धनः तत् प्राप्य गृहं प्रतिगत्य पत्न्यै तत् दत्तवान् । पत्नी विपणिं गत्वा कानिचन वस्तूनि आनीतवती । अतः गृहे रात्रौ सर्वैः आतृप्ति भोजनं कृतम् ।

अनन्तरदिने अपि निर्धनः राज्ञः आस्थानं गतवान् । तदीयम् आशीर्वादं प्राप्य राजा यथापूर्वं कागदखण्डे किमपि लिखित्वा दत्तवान् । तत् कोषाध्यक्षाय दत्त्वा पुनरपि एकं रजतनाणकं प्राप्तवान् निर्धनः ।

अनन्तरेषु द्वित्रेषु दिनेषु अपि एषः एव क्रमः अनुवृत्तः । प्रतिदिनं राजास्थानं प्रति निर्धनस्य आगमनं, कोषागारं गत्वा धनस्य प्राप्तिः च रक्षकभटेन केनचित् लक्षिता । कोषागारात् धनं प्राप्य ग्रामं प्रतिगच्छन्तं तं सः रक्षकभटः वेगेन अनुसृतवान् । 'श्वः एषः पुनरपि न



आगच्छेत् अपि । अतः अद्यैव मया इतः किञ्चित् प्राप्तव्यम्' इति अचिन्तयत् सः ।

वेगेन पदानि स्थापयन् सः निर्धनम् उपसृत्य तस्य स्कन्धे हस्तं संस्थाप्य तदीयं गमनं निवारितवान् । निर्धनः आश्चर्येण तस्य मुखम् अपश्यत् ।

''श्रीमन् ! प्रतिदिनं भवान् राजास्थानम् आगत्य राजतः कागदखण्डं प्राप्य कोषागारात् नाणकं प्राप्नोति । अहं तु भवते अन्तः प्रवेशाय अनुमतिं दत्तवान् । भवान् तु मह्यम् ...''

तस्य भटस्य वचनस्य समाप्तितः पूर्वम् एव निर्धनः मुखं परिवृत्य तस्मै किमपि अदत्त्वा ततः निर्गतवान् ।

अनन्तरदिने अपि निर्धनः यथापूर्वं राज्ञः



आस्थानम् आगत्य राजतः कागदखण्डं प्राप्य कोषागारतः धनं स्वीकृत्य प्रस्थितवान् । तदा सः भटः तम् अनुसृत्य आगत्य तदीयं हस्तं गृहीत्वा - ''श्रीमन् ! अहं किञ्चित् वक्तुम् इच्छामि । ह्यः राजा भवद्विषये असन्तुष्टः दृष्टः मया'' इति अवदत् ।

एतत् श्रुत्वा निर्धनः क्षणकालं स्तब्धः सन् मौनेन स्थितवान् । क्षणकालं विश्रम्य सः अवदत् - ''मया तु राज्ञः असन्तोषकारकं किमपि न कृतम् । किं प्रवृत्तं ह्यः ?'' इति ।

भटः निर्धनस्य अतिसमीपम् आगत्य मन्देन स्वरेण अवदत् - ''ह्यः रात्रौ अहं राज्ञः पादौ संवाहयन् आसम् । तदा राजा अवदत् - 'यः प्रतिदिनं राजास्थानम् आगच्छति सः निर्गमनात् पूर्वं किमपि वदति । तदवसरे तस्य मुखात् महान् दुर्गन्धः निर्गच्छति' इति । भवते दर्शनाय अनुज्ञा न दातव्या इति राजानम् उद्दिश्य मम कथनम् अनुचितं भवेत् खलु ?'' इति ।

''आम्, आम् । भवता तथा न वक्तव्यम् । मयि भवता यः विश्वासः कृतः तदर्थम् अहं कृतज्ञः अस्मि । अहं श्वः आरभ्य जागरूकतां वक्ष्यामि । श्वः अहं मम मुखं वस्त्रखण्डेन आवृत्य एव राजसभां प्रवेक्ष्यामि'' इति उक्त्वा ततः निर्गतवान् निर्धनः ।

अनन्तरदिने राज्ञः आस्थानस्य प्रवेशसमये सः वस्त्रखण्डेन स्वस्य मुखं नासिकां च आवृतवान् आसीत् । राजा एतत् विशेषतः न लक्षितवान् एव । सः यथापूर्वं तस्य आशीर्वादं श्रुत्वा तस्मै कागदखण्डं दत्त्वा प्रेषितवान् । एतस्मिन् दिने भटः तं न अनुसृतवान् ।

रात्रौ राज्ञः पादयोः संवाहनाय गतः भटः राजानम् अवदत् - ''प्रतिदिनं भवदास्थानम् आगच्छन् सः निर्धनः नितरां दुष्टः अस्ति'' इति ।

''किमर्थं तथा उच्यते ? स तु सज्जनः, मृदुभाषी, कोमलहृदयः च इति भाति । प्रतिदिनं सः माम् आशिषा अनुगृह्णाति अपि'' इति अवदत् राजा ।

''सः अद्य स्वस्य मुखं नासिकां च वस्त्रेण आवृतवान् आसीत् इत्येतत् किं न लक्षितं

भवता ?'' इति अपृच्छत् भटः ।

''तत् तु लक्षितं मया । प्रायः दन्तवेदनया पीडितः स्यात् सः'' इति अवदत् राजा ।

''तथा नास्ति महाराज ! मया पृष्टः सः यत् उत्तरं दत्तवान् तत्तु नितराम् आघातकरम् । 'यदा आशीर्वादवचनकथनाय मुखं राजसमीपं नीयते तदा तत्कर्णतः दुर्गन्धः निर्गच्छति । तदर्थं मया तथा कृतम्' इति वदति सः'' इति अवदत् भटः ।

राजा प्रतिवचनं किमपि अवदन् शयनम् अकरोत् । शयनसमये अपि निर्धनस्य वचनम् एव तस्य कर्णयोः गुञ्जति स्म – 'यत् श्रेष्ठं तत् सदा श्रेष्ठम् एव । तुच्छं तु तुच्छमेव' इति ।

अनन्तरदिने निर्धनः यथापूर्वम् आस्थानम् आगतवान् । तस्य मुखम् वस्त्रखण्डेन आवृतं न आसीत् । राजतः कागदखण्डं प्राप्य यदा सः प्रस्थितवान् तदा द्वारदेशस्थः भटः अवदत् – ''अद्यावधि भवता मह्यं किमपि न दत्तम् एव । एतत् न उचितम्'' इति ।

''मित्र ! क्षन्तव्यः अहम् । अद्यतनं रजतनाणकं भवान् एव स्वीकरोतु । एतं कागदखण्डं कोषाध्यक्षाय दर्शितं चेत् रजतनाणकं प्राप्यते'' इति उक्त्वा कागदखण्डं भटाय दत्त्वा ततः निर्गतवान् निर्धनः ।

भटः तं कागदखण्डं कोषाध्यक्षाय दत्तवान् । कोषाध्यक्षः तत्र लिखितं पठित्वा अवदत् – ''क्षणं प्रतीक्षताम्'' इति ।

अल्पे एव काले क्षौरिकः कश्चन भटाभ्यां सह तत्र आगतवान् । भटौ तं दृढतया गृहीतवन्तौ । क्षौरिकः झटिति तस्य नासिकां कर्णौ च कर्तितवान् ।

रक्तस्रावम् अपि अपरिगणयन् सः भटः धावन् राजसमीपं गत्वा कोषाध्यक्षे अपराधम् आरोपितवान् ।

''मया तस्मै निर्धनाय दत्तः कागदखण्डः भवता कथं प्राप्तः ?'' इति कुतूहलेन अपृच्छत् राजा ।

''महाप्रभो ! परितोषार्थं किमपि दातव्यम् इति मया उक्तम् । अतः तेन स च कागदखण्डः मह्यं दत्तः'' इति अवदत् भटः ।

''भवता निर्धनस्य पीडार्थं प्रयासः कृतः । अतः यथायोग्यं दण्डनं प्राप्तम् अस्ति भवता । तुच्छं सदा तुच्छम् एव भवति इति तेन सज्जनेन यत् उक्तं तत् युक्तम् एव अस्ति'' इति अवदत् राजा ।






# अन्तिमं होलिपर्वाचरणं तेषाम् !!



गुजरातराज्ये स्थिताः डोम्केडिजातीयाः वनवासिनः स्वभूमौ अन्तिमं होलिपर्व आचरितवन्तः एषु दिनेषु । तदनन्तरदिने एव तेषां जन्मभूमिः नर्मदायां विलीना जाता ।

आश्चर्यं नाम यस्मिन् दिने पर्वाचरणं निश्चितं ततः पूर्वतने नद्याः प्रवाहे अपसरणं दृष्टं, येन च मध्यप्रदेशात् आगतानाम् एतेषां वनवासिनां पर्वाचरणे आनुकूल्यं जातम् । ते वनवासिनः जाम्बुवाजनपदे स्थिते जलसिन्धिप्रदेशे होलिपर्वणः आचरणं समाप्य आगतवन्तः आसन् ।

एतस्मिन् आचरणे मेधापाटकर अपि भागं गृहीतवती, या च नर्मदाजलबन्धस्य औन्नत्यस्य वर्धनस्य विरोधं कृतवती, निराश्रयानां वनवासिनां वसतिव्यवस्थाकल्पने आस्थाम् ऊढवती च ।

होलिपर्वणः पूर्वस्यां रात्रौ ते वनवासिनः ६०आनकानि वादयन्तः नृत्यं कृतवन्तः । होलिदिने अग्निं प्रज्वाल्य होमं कृत्वा आराध्यदेवं पूजितवन्तः ते ।

एतस्मिन् प्रदेशे पूर्वं ५२ विधजातीयाः वनवासिनः निवसन्ति स्म । एतस्य वर्षस्य एतत् पर्वाचरणं महाराष्ट्रमध्यप्रदेशयोः वनवासिनः अपि आकर्षत् । पर्वाचरणानन्तरं ते पर्वतस्य ऊर्ध्वभागे तिष्ठन्तः नर्मदानदीजलेन आक्रम्यमाणं स्ववासस्थलं सविषादं दृष्टवन्तः ।

# मृगयाकुशलः शुनकः

नागराजः कश्चन कृषिकः । पित्रादिभिः पोषितां भूमिं विक्रीय सः अरण्यसमीपे स्थितां विशालां शुष्कभूमिं क्रीतवान् । कीदृश्यां भूमौ किम् आरोपितं चेत् उत्तमा फलसमृद्धिः प्राप्यते इति सः जानाति स्म । अतः सः स्वीयायां भूमौ व्रीहिफलादिवर्धनाय योजनां कृतवान् ।

ततः कर्मकरान् स्वीकृत्य तेन योजनानुगुणं कृषिः आरब्धा । स्वयम् अपि तेन परिश्रमः कृतः । अतः पञ्चषवर्षाभ्यन्तरे तेन प्रभूतं धनं सम्पादितम् । भूस्वामिषु अन्यतमत्वेन सः परिगणितः जातः अपि ।

तस्य भूमिः अरण्यपार्श्वे आसीत् इत्यतः वन्यजन्तूनां पीडा प्रवृद्धा । वराहाः, शृगालाः, हरिणाः इत्यादयः रात्रौ आगत्य सस्यानि खादन्ति स्म, नाशयन्ति स्म अपि । एतस्याः समस्यायाः निवारणं कथम् इति तेन न ज्ञातम् ।

सः स्वसमस्यां पार्श्वग्रामस्य भूस्वामिनम् अवदत् । तदा सः पार्श्वग्रामीयः भूस्वामी अवदत् - ''भवतः समस्या न महती । कश्चन मृगयाकुशलः शुनकः पाल्यताम् । रात्रौ सः उन्मुक्तः क्रियताम् । तस्य आकारात् भषणात् च भीताः वन्यपशवः क्षेत्रप्रवेशे धैर्यं न करिष्यन्ति'' इति ।

एतं परिहारमार्गं श्रुत्वा नागराजः नितरां सन्तुष्टः । सः सेवकम् आहूय अवदत् - ''एतानि विंशतिं रूप्यकाणि स्वीकृत्य विपणिं गत्वा एकं मृगयाकुशलं शुनकं क्रीत्वा आनयतु'' इति ।

धनं स्वीकृतवान् सः सेवकः अवदत् - ''श्रीमन् ! मृगयाकुशलः शुनकः विंशत्या रूप्यकैः न प्राप्येत । इतोऽपि विंशतिः रूप्यकाणि दीयन्ताम्'' इति ।

नागराजः तस्मै पुनरपि विंशतिं रूप्यकाणि दत्तवान् ।

तानि स्वीकृत्य प्रतिष्ठमानः सः सेवकः अपृच्छत् - ''श्रीमन् ! मृगयाकुशलः शुनकः कीदृशः भवति ?'' इति ।





# धर्माचरणम्

प्राचीने काले ब्रह्मदत्तः काशीराज्यं परिपालयति स्म । तस्मिन् एव काले बोधिसत्त्वः धनञ्जयनाम्ना इन्द्रप्रस्थे जन्म प्राप्तवान् आसीत् । तस्य शासनकाले वृष्ट्यादयः समये भवन्ति स्म । क्षामादीनां वार्ता अपि न आसीत् । जनाः सुखेन जीवन्ति स्म ।

तेषु एव दिनेषु दन्तपुरं राजधानीं परिकल्प्य कालिङ्गः नाम राजा कलिङ्गदेशं पालयति स्म । तस्य देशे सर्वदा क्षामः भवति स्म । जनाः बुभुक्षया प्राणैः वियुक्ताः भवन्ति स्म । राज्ये सर्वत्र हाहाकारः श्रूयते स्म ।

देशस्य दुरवस्थां दृष्ट्वा राजा नितरां खिन्नः । सः कदाचित् मन्त्रिणः मेलयित्वा अपृच्छत् – ''एतस्मिन् वर्षे अस्माकं देशे महान् क्षामः दृश्यते । एतस्य किं कारणम् ? एतस्य निवारणाय कः उपायः ?'' इति ।

तदा मन्त्रिणः अवदन् – ''महाराज ! देशे यदा धर्मस्य क्षयः भवति तदा विविधाः उत्पाताः सम्भवन्ति । इन्द्रप्रस्थस्य राजा धर्मेण राज्यं पालयति । अतः तस्य देशे सुवृष्टिः सुभिक्षः च सदा भवति । तत्र क्षामस्य वार्ता अपि नास्ति । जनाः तत्र सुखेन सन्ति'' इति ।

''तर्हि भवन्तः एकं कार्यं कुर्वन्तु । अद्यैव इन्द्रप्रस्थं गत्वा धनञ्जयस्य दर्शनं कुर्वन्तु । सुवर्णपत्रेषु धर्मसूत्राणि लेखयित्वा आनयन्तु । वयम् अपि तानि व्यवहारपथम् आनीय देशं सुसमृद्धं करवाम'' इति अवदत् राजा ।

तस्मिन् एव दिने कलिङ्गदेशस्य मन्त्रिणः सुवर्णपत्राणि स्वीकृत्य इन्द्रप्रस्थं गतवन्तः । राजानं धनञ्जयं दृष्ट्वा ते अवदन् – ''महाराज ! वयं कलिङ्गदेशीयाः । अस्माकं देशः घोरेण क्षामेण ग्रस्तः अस्ति । भवान् तु मूर्तिमान् धर्मः एव । धर्मेण एव प्रजाः पाल्यन्ते भवता । अतः एव अत्र जनाः सुखेन निवसन्ति । अस्माकं राज्ञा ये धर्मनियमाः अनुसरणीयाः सन्ति तान् सुवर्णपत्रे लिखित्वा ददातु कृपया । तेषाम् अनुसरणेन अस्माकं राजा प्रजाः क्षाममुक्ताः करिष्यति'' इति । एतावत् उक्त्वा ते

सुवर्णपत्राणि राज्ञः पुरतः अस्थापयन् ।

तदा धनञ्जयः तान् प्रणम्य अवदत् - ''मन्त्रिवर्याः ! अहं क्षन्तव्यः । एतेषु पत्रेषु धर्मनियमानां लेखने अर्हता नास्ति मम । यतः मया पूर्वं कदाचित् धर्मनियमस्य उल्लङ्घनं कृतम् आसीत् । अस्माकं देशे त्रिषु वर्षेषु एकवारं कार्त्तिकोत्सवः आचर्यते । तदवसरे कासारतीरे यज्ञं कृत्वा चतसृषु दिक्षु चत्वारः बाणाः प्रयोक्तव्याः राज्ञा । मया तिसृषु दिक्षु सम्यक् एव बाणाः प्रयुक्ताः । किन्तु एकः बाणः जले पतितः । तस्य आघाततः मत्स्याः मण्डूकाः च केचन मृताः । एवं मया अधर्मः आचरितः तदा । यदि मम देशे अत्याचारः अन्याय्यम् इत्यादयः न स्युः तर्हि तस्य कारणं पूर्वजैः कृतं पुण्यम् एव । अतः मम पूर्वजेषु सः पुण्यात्मा कः आसीत् इति ज्ञातुं प्रयासं कुर्वन्तु'' इति ।



एतत् श्रुत्वा कलिङ्गमन्त्रिणः नितराम् आश्चर्यचकिताः । ते ततः निर्गत्य राजमातरं मायादेवीं दृष्टवन्तः । सर्वं ताम् उक्त्वा निवेदितवन्तः ते - ''अम्ब ! कृपया भवती धर्मसूत्राणि लिखित्वा ददातु'' इति ।

''वत्साः । मया अपि धर्मनियमस्य अतिक्रमणं कृतम् एव । कदाचित् मम ज्येष्ठः पुत्रः मह्यं सुवर्णहारम् उपायनीकृतवान् । ज्येष्ठा स्नुषा आभरणसम्पन्ना इति विचिन्त्य मया स च सुवर्णहारः कनिष्ठस्नुषायै दत्तः । किन्तु अनन्तरक्षणे मम पक्षपातव्यवहारविषये मया खेदः अनुभूतः । अतः धर्मसूत्राणां लेखने नास्ति मम योग्यता'' इति अवदत् राजमाता ।

एतदनन्तरं कलिङ्गदेशस्य मन्त्रिणः राज्ञः अनुजं नन्दं दृष्टवन्तः । सः अपि - 'मया अपि धर्मनियमस्य अतिक्रमणं कृतम् एव' इति वदन् काञ्चित् घटनां श्रावितवान् - ''अहं प्रतिदिनं सायम् अन्तःपुरं गच्छामि । कदाचित् रात्रौ तत्रैव वसामि अपि । यदि अहं रथे कशां परित्यज्य गच्छामि तर्हि तस्य अर्थः - अहं रात्रौ राजप्रासादे न वसामि इति । अतः तादृशे अवसरे सारथिः रथे उपविश्य मां प्रतीक्षते । यदि अहम् आत्मना सह कशाम् अपि नयामि तर्हि रात्रौ मया राजप्रासादे एव वासः क्रियते इत्यर्थः । तदा सारथिः रथं प्रतिनयति, अनन्तरदिने प्रातः रथम् आनयति च । कदाचित् मया रथे कशां परित्यज्य राजभवनं प्रविष्टम् । रात्रौ प्रतिगन्तव्यम् इत्येव मम चिन्तनम् आसीत् । किन्तु अष्टवादनसमये महती वृष्टिः आरब्धा । तत्रैव वासः करणीयः इति राज्ञा बहुधा अनुरोधः कृतः । अतः मया

तस्यां रात्रौ राजभवने एव शयनं कृतम् । मां प्रतीक्षमाणः सारथिः वृष्टौ शैत्ये च रथे एव उपविष्टवान् आसीत् । एवं तं कष्टे पातयता मया धर्मविरोधः आचरितः'' इति ।

'एतद्देशीयः राजपुरोहितः वा धर्मम् अनूचानतया पालितवान् स्यात्' इति चिन्तयन्तः मन्त्रिणः तस्य समीपं गतवन्तः ।

सः अपि धर्मातिक्रमणस्य विषयं वदन् एकं प्रसङ्गम् अश्रावयत् – ''कदाचित् राजभवनं गच्छता मया राजमार्गे कश्चन रथः दृष्टः । सः सुवर्णपटलेन आवृतः आसीत् । तस्य दर्शनात् मम मनसि भावना उत्पन्ना यत् यदि राजा एतं मह्यं दद्यात् तर्हि अहो ! महान् आनन्दः स्यात् इति । राजा मया यदा दृष्टः तदा सः अवदत् – 'एतं रथम् अहं भवते यच्छामि । कृपया स्वीक्रियताम्' इति । रथप्राप्तीच्छानिमित्तं पश्चात्तापम् अनुभवन् अहं तस्य स्वीकारं निराकृतवान् । अतः अहं धर्मसूत्राणि लेखितुम् अनर्हः'' इति ।

कार्यसाधनार्थं किं करणीयम् इति कलिङ्गमन्त्रिभिः न ज्ञातम् । ते इन्द्रप्रस्थस्य महामन्त्रिणः समीपं गतवन्तः । महामन्त्री अपि एतद्विषये स्वस्य असहायकतां दर्शयन् अवदत् – ''कदाचित् मया कस्यचित् कृषिकस्य क्षेत्रस्य मापनाय गतम् आसीत् । मापनानन्तरं मया स्तम्भः निखातव्यः आसीत् । किन्तु यत्र स्तम्भस्य निखननं करणीयं तत्र किञ्चन बिलं दृष्टम् । पार्श्वे निखननं क्रियेत चेत् कृषिकस्य हानिः । तद्विरुद्धदिशि निखननं क्रियेत चेत् राज्ञः हानिः । अतः मया आज्ञा कृता यत् बिलस्थले एव निखननं भवतु इति । सेवकेन तथैव कृतम् । तस्मात् आघातं प्राप्य कश्चन वृश्चिकः मृतः । अतः मया अपि धर्मस्य अनुपालने प्रमादः कृतः एव । अहं कथं वा धर्मसूत्राणां लेखने अधिकारी भवेयम् ?'' इति ।

सर्वस्य श्रवणस्य अनन्तरं कलिङ्गमन्त्रिणां मनसि कश्चन विचारः आगतः । ते आत्मना श्रुताः कथाः एव स्वर्णपत्रेषु लिखितवन्तः । तानि पत्राणि राज्ञे दत्तवन्तः ते । कलिङ्गराजः अवगतवान् यत् निष्कपटव्यवहारः एव धर्मसारः इति । अतः सः धर्मविषये निष्कपटव्यवहारं कुर्वन् शासनम् आरब्धवान् । तस्मात् अचिरात् एव कलिङ्गदेशे वृष्टिः जाता । जनाश्च सुखेन जीवनम् आरब्धवन्तः ।





# मान्त्रिकस्य जीवनम्

हरिपुरं कश्चन लघुः ग्रामः । तत्रत्याः सर्वे कृषिजीविनः । तेषां वैशिष्ट्यं नाम ते यथा कृषौ तथैव कुलवृत्तौ अपि निपुणाः एव । नगरे यानि वस्तूनि आवश्यकानि भवन्ति तानि निर्मान्ति ते । अतः नगरं प्रति तेषां गमनागमनं बहुधा भवति । हरिपुरे निर्मीयमाणानि वस्तूनि नगरे योग्यमूल्येन विक्रीतानि भवन्ति अपि ।

हरिपुरे सोमनाथः नाम कश्चन निर्धनः निवसति । स्वीयं कृषिक्षेत्रं नास्ति तस्य । धनिकानां गृहं गत्वा तैः यत् कार्यं सूच्यते तत् करोति सः । तस्य पत्नी सीता विविधानि खाद्यानि निर्माय ग्रामे विक्रीणीते । द्वादशवर्षीया पुत्री गृहे पाकं करोति, अनुजं पालयति च ।

कदाचित् योगी आनन्दः तं ग्रामम् आगतवान् । तस्य उपदेशं श्रोतुं जनाः बहवः सम्मिलिताः । आनन्दः तान् अबोधयत् - ''स्वास्थ्यं सन्तृप्तिः च मानवं सुखिनं सन्तुष्टं च करोति । स्वगृहस्य कार्यं स्वयं कृतं चेत्, गृहे निर्मितम् एव खाद्यं सेवितं चेच्च स्वास्थ्यं रक्षितं स्यात्'' इति ।

तस्य प्रवचनस्य परिणामतः सर्वे ग्रामजनाः स्वगृहस्य कार्यं स्वयं कर्तुम् उद्युक्ताः जाताः । खाद्यानां निर्माणम् अपि गृहे गृहे आरब्धम् । तस्मात् कारणात् सोमनाथः सीता च कार्यविहीनौ जातौ ।

यत् प्रवृत्तं तस्य कारणम् अस्ति योगी आनन्दः एव इति अचिन्तयत् सोमनाथः । अतः सः आनन्दं दृष्ट्वा स्वीयां कथां श्रावितवान् । सर्वं श्रुत्वा आनन्दः अवदत् - ''एतस्मिन् ग्रामे तादृशः प्रायः कोऽपि नास्ति, यश्च मम वचनं श्रुत्वा लाभान्वितः न स्यात् । एवं स्थिते भवान् एकः एव कष्टम् अनुभवति यत् तस्य कः कारणीभूतः स्यात् ? भवान् उत अहम् ?'' इति ।

''श्रीमन् ! दोषः कस्य इति विवेचनेन न किमपि प्रयोजनम् इदानीम् । मम कुटुम्बः



बुभुक्षया म्रियमाणः अस्ति । मम गृहजनाः बुभुक्षया मृताः यथा न भवेयुः तथा कमपि मार्गं दर्शयतु कृपया'' इति दैन्येन निवेदितवान् सोमनाथः ।

''जनानाम् अपेक्षाः भवन्ति विविधाः । एताः अवलम्ब्य कश्चन जीवनमार्गः प्राप्येत एव । भवता एतद्विषये न चिन्तितम् इत्यतः एषा दुर्दशा भवतः । इदानीम् अपि कालः न अतीतः । अतः कुटुम्बपोषणाय कमपि मार्ग चिन्तयतु'' इति ।

एतत् श्रुत्वा सोमनाथः खेदेन अवदत् - ''पूर्णोदरस्य उपदेशवचनानि एतानि । एतेषां श्रवणात् बुभुक्षा तु उपशान्ता न भवति'' इति ।

तदा आनन्दः हसन् अवदत् - ''पूर्वम् अहमपि महान्तं परिश्रमं कृत्वा अपि पूर्णोदरं भोजनं न प्राप्नोमि स्म । किन्तु अत्रान्तरे कस्यचित् महात्मनः परिचयः प्राप्तः इत्यतः अहं संन्यासी जातः । इदानीम् उदरपूरण-समस्या मां न बाधते । अतः भवान् अपि एतम् एव मार्गं यदि अनुसरेत् तर्हि वरं स्यात्'' इति ।

''भवतः मार्गः रमणीयः एव । किन्तु किं करवाणि ? यदि अहम् एतं मार्गम् आश्रयेयं तर्हि मम तु उदरं पूरितं भवेत्, किन्तु मम कुटुम्बस्य जनाः मरणं प्राप्नुयुः'' इति अवदत् सोमनाथः ।

''वत्स ! अलं चिन्तया । अहम् अद्य एतं ग्रामं परित्यज्य गच्छन् अस्मि । मम शिष्यस्य परिचयं कारयामि । यावत् भवता उद्योगमार्गः न प्राप्स्यते तावत् भवतः कुटुम्बस्य पोषणं सः करिष्यति । मन्त्रतन्त्रज्ञः अस्ति सः'' इति अवदत् आनन्दः ।

सोमनाथः एतं प्रस्तावं सहर्षम् अङ्गीकृतवान् । ततः योगी शिष्यं टीकापतिम् आहूतवान् । टीकापतिः दृढकायः उन्नतः च । तस्य केशाः जटात्वं गताः सन्ति । तदीये नेत्रे रक्ते स्तः । श्मश्रुलः अपि सः । दर्शनमात्रेण एव भासते स्म यत् अयं कश्चन मान्त्रिकः अस्ति इति ।

आनन्दः टीकापतिम् उद्दिश्य - ''अहम् एतं ग्रामं परित्यज्य गच्छन् अस्मि । एषः सोमनाथः निर्धनः । पञ्चदश दिनानि यावत् एतस्य पोषणं करणीयं भवता । एतस्य कुटुम्बस्य जनाः बुभुक्षया मरणं यथा न प्राप्नुयुः तथा द्रष्टव्यम् अपि । पक्षानन्तरं भवान् मन्त्रशक्तिम् अवलम्ब्य मत्समीपम् आगन्तुम्

अर्हति'' इति अवदत् ।

टीकापतिः आनन्दं प्रणम्य सोमनाथेन सह तदीयं गृहं प्रति प्रस्थितवान् ।

तस्य दर्शनात् गृहजनाः चिन्तितवन्तः यत् एषः निश्चयेन कुतश्चित् आहारम् आनीय दद्यात् इति । टीकापतिः तेषां समीपम् आगत्य - ''सर्वे नेत्रे निमील्य उपविश्य इष्टं खाद्यं सकृत् स्मरन्तु । ततः नेत्रे उन्मीलयन्तु'' इति अवदत् ।

सर्वे तस्य आदेशं पालितवन्तः । सोमनाथः नेत्रे निमील्य अन्नं पायसं च स्मृतवान् । अन्ये अपि इष्टं खाद्यं स्मृत्वा नेत्रे उन्मीलितवन्तः । सर्वेषां पुरतः सुवर्णस्थालिकायाम् इष्टं सर्वम् उपस्थितम् आसीत् । सर्वे सन्तोषेण भोजनं कृतवन्तः । ततः सुवर्णस्थालिकाः अदृश्यतां गताः ।



सर्वे टीकापतेः स्तुतिं कृतवन्तः । टीकापतिः सोमनाथम् अवदत् - ''अहं पञ्चदश दिनानि अत्र स्थास्यामि । तदभ्यन्तरे भवता जीवनमार्गः अन्वेष्टव्यः'' इति ।

क्षणं विचिन्त्य सोमनाथः अवदत् - ''आर्य ! भवान् यां मन्त्रविद्यां जानाति तां माम् अपि बोधयतु'' इति ।

तदा टीकापतिः हसन् अवदत् - ''भोः, श्वासोच्छ्वासाय वायुः, पानाय जलं, खादनाय आहारः च आवश्यकः । ते सर्वे निसर्गेण दीयन्ते । महामान्त्रिकः तु सः भगवान् एव । मन्त्रज्ञानात् मानवेन यावत् सुखं प्राप्येत ततोऽपि अधिकं कष्टम् असन्तोषः च प्राप्यते । अतः मन्त्रविद्यायाः आशां परित्यज्य जीवनाय अन्यः कोऽपि योग्यः मार्गः अन्विष्टः चेदेव वरम्'' इति ।

''भवान् तु मन्त्रज्ञः एव खलु ? किं कष्टम् अनुभूयते भवता ? का च असन्तुष्टिः भवन्तं बाधते ? किं भवान् सुखेन नास्ति ?'' इति अपृच्छत् सोमनाथः ।

तदा टीकापतिः शान्तेन स्वरेण अवदत् - ''मया यत् कष्टादिकम् अनुभूतं तत् कुत्रापि न वक्तव्यम् इति गुरोः आज्ञा अस्ति । अतः अहं किमपि न वदामि । मम निर्गमनात् पूर्वं भवता कीदृशः जीवनमार्गः अन्विष्टः इति वक्तव्यम् । ततः अहं भवते मन्त्रशक्तेः दानविषये चिन्तयिष्यामि'' इति ।

मन्त्रविद्यायाः ज्ञानाय प्रयासः न सरलः इति अवगतवान् सोमनाथः । अतः सः तत्पत्नी च वृत्तिमार्गस्य अन्वेषणाय ग्रामे सर्वत्र अटितवन्तौ ।

दिनानि कानिचन गतानि । कदाचित्

सोमनाथः टीकपतिम् अपृच्छत् – "भवतः गुरुः अवदत् यत् अहम् उदरपूरणाय एव योगी अभवम् इति । मान्त्रिकः भवान् तादृशस्य शिष्यः कथं जातः ?" इति ।

"आनन्दवर्यः तु महाज्ञानी अस्ति । भवतः तुप्त्यर्थं तेन तथा उक्तं, तावदेव । सः यद्यपि अपूर्वसामर्थ्यवान् एव, तथापि न स्वतन्त्रः । भवता पातालभैरवकथा श्रुता स्यात् । तद्वत् अन्याधीनः सः । कठोराः नियमाः पालनीयाः भवन्ति तेन । लौकिकाः इच्छाश्च परित्यक्तव्याः भवन्ति । अतः एतत् मान्त्रिकजीवनं नितरां कठिनम् । सामान्याः तं मार्गम् अनुसरन्ति चेत् महत् कष्टम् अनुभवन्ति" इति अवदत् टीकापतिः ।

सोमनाथः एतत्सर्वं पत्नीं निवेद्य अवदत् – "मयि भीतिं जनयितुम् एव टीकापतिः एवं वदन् अस्ति इति भाति । महत् कष्टम् अपि सोढ्वा अहं मन्त्रविद्यां ज्ञास्यामि एव । भवतः सर्वान् सदा सन्तुष्टान् करिष्यामि अपि" इति ।

"मन्त्रविद्यायाः ज्ञानाय महत् कष्टम् अनुभोक्तव्यम् इति तु सत्यम् एव । ततः विरक्तेन अपि भवितव्यम् । यदि अस्माकं सन्तोषः एव भवतः लक्ष्यं तर्हि मन्त्रविद्यायाः ज्ञानाय प्रयत्नस्य त्यागः वरम् । यत् विरक्तानां लक्ष्यं स्यात् तत् लौकिकानां जीवनस्य लक्ष्यं भवितुं न अर्हति" इति अवदत् सीता ।

टीकापतेः प्रस्थानदिनम् अपि आगतम् । प्रस्थानात् पूर्वं टीकापतिः सोमनाथम् अवदत् – "एषोऽहं प्रस्थितः । भवतः अग्रिमजीवनस्य कः मार्गः इति मया एतावता अपि न ज्ञातम्" इति ।

तदा सोमनाथः अवदत् – "ग्रामजनाः प्रायः कीदृशानि वस्तूनि इच्छन्ति इति मया मत्पत्न्या च ज्ञातम् अस्ति । नगरे कीदृशानि वस्तूनि विक्रीतानि चेत् अधिकः लाभः इत्यपि आवाभ्यां ज्ञातम् अस्ति । अतः आवाम् अल्पेन प्रमाणेन वाणिज्यस्य आरम्भं करिष्यावः । अर्थसामर्थ्यं प्राप्य गच्छता कालेन तत् विस्तारयिष्यावः । मन्त्रविद्यायां मम आसक्तिः नास्ति इदानीम्" इति ।

एतत् श्रुत्वा टीकापतिः नितरां सन्तुष्टः । सोमनाथः योग्यं मार्गं चितवान् अस्ति इत्यतः सः तृप्तिं प्राप्य गुरुणा आनन्देन मेलनाय ततः प्रस्थितवान् ।





# विष्णुपुराणम्

अहिंसाप्रधानस्य प्रशान्तजीवनयुतस्य, कुल-वर्गभेदरहितस्य समाजस्य स्थापनायां जनान् प्रबोधयन् बौद्धधर्मः वटवृक्षः इव सर्वत्र प्रसृतः अभवत् ।

मानवजगतः उद्धारार्थं भूलोकम् अवतीर्णः करुणामूर्तिः सिद्धार्थः 'तथागतः' इति ख्यातः । भगवदवतारभूतस्य एतस्य महिमा हिमालयस्य इव वर्धमानः आसीत् । एतेन सह एव जन्मशत्रोः देवदत्तस्य बुद्धविषयिणी ईर्ष्या अपि वर्धते स्म ।

वृद्धावस्थायाम् अपि बुद्धः समाजे सर्वत्र भ्रमणं करोति स्म । सः उपेक्षितबान्धवान् अपि स्वीयैः उपदेशैः पावयन्, तान् स्वशिष्यगणे योजितवान् । एतत् असहमानः देवदत्तः मनसि प्रतिकारयोजनाम् आरचयन् आसीत् ।

ये ये बुद्धविरोधिनः आसन् तान् सर्वान् मेलयन् देवदत्तः तेषां सम्मुखे स्वीयं कुतन्त्रं प्रतिपादयति स्म ।

एकदा देवदत्तः चर्चासमये बुद्धं पृष्टवान् - ''भवान् अहिंसायाः प्रचारं करोति । एतत् उचितम् एव । एतेन सिद्धान्तेन प्रभाविताः बहवः बौद्धभिक्षवः सञ्जाताः । 'मांसाहारः निषिद्धः' इति एते सर्वे बोधिताः । किन्तु एतद्विषये कठोरः नियमः केनापि न पालितः । किम् एतत् उचितम् ?'' इति ।

''वत्स, देवदत्त ! 'बौद्धमतस्य अनुयायिनः अहिंसाव्रतं परिपालयेयुः' इति मया निवेदनं तु कृतम् अस्ति । किन्तु केचन दारिद्र्यकारणतः समये यत् प्राप्तं तत् खादन्तः मांसाहारिणः जाताः । धनिकवर्गेण सुलभतया यथा प्राप्यते तथा बलवर्धकः शाकाहारः निर्धनैः जनैः न प्राप्यते । मानवानां सेवाम् एव स्वधर्मं



भावयन्तः बौद्धभिक्षवः प्राणधारणमात्रार्थम् आहारं स्वीकुर्वन्ति । तदपि भिक्षाद्वारा ! दातारः यत् यच्छन्ति तत् स्वीकुर्वन्ति भिक्षवः । 'भिक्षादातारः सर्वे अपि मांसाहारं परित्यज्य शाकाहारिणः भवेयुः' इति आदेशं कर्तुं मम कः अधिकारः ? बौद्धमतं तु जातिं, कुलं, वर्णं वा न परिगणति । सर्वसमतां प्रतिपादयन्तः बौद्धभिक्षवः यदि मांसाहारिणः शाकाहारिणः इति जनेषु भेदं गणयन्तः भिक्षायाचनं कुर्वन्ति तर्हि तत् व्यवहारविरुद्धं सिद्धान्तविरुद्धं च भविष्यति । भेदभावना यथा न उत्पद्येत तथा व्यवहर्तव्यम् इत्येव मम सिद्धान्तः । भिक्षासमये यत् उपलभ्यते तत् स्वीकरणीयम् । एतत् भिक्षुजीवने अनिवार्यम्'' इति उक्तवान् बुद्धः ।

''भवतः कथनस्य अयम् अभिप्रायः यत् गृहस्थः भिक्षारूपेण यद्यत् ददाति तत्सर्वं भिक्षुणा स्वीकरणीयम् एव इति किल ?'' इति दर्पेण पृष्टवान् देवदत्तः ।

तदा बुद्धः मन्दहासं प्रकटयन् उक्तवान् - ''यः यत्प्रकारकेण आहारेण स्वीयं जीवनं यापयति सः तदेव भिक्षारूपेण ददाति । जातिकुलादिभेदम् अगणयन् भिक्षुः तेन दत्तं खादेत् एव । एषः च भिक्षुधर्मः'' इति ।

बुद्धस्य एतत् वचनं श्रुत्वा शिरः कम्पयन् देवदत्तः ततः निर्गतः ।

देवदत्तः चिन्तितवान् - 'बुद्धस्य अन्त्यं भवेत् एव । अन्यथा सः वार्धक्यं स्वास्थ्यं च अविगणयन् बौद्धमतस्य प्रचारं करिष्यति । निम्नजातीयान् ज्ञानिरूपेण परिवर्तयन् तान् सर्वान् बौद्धमतावलम्बिनः विधास्यति । निम्नवर्गीयाः यदि प्रवृद्धाः भविष्यन्ति तर्हि उच्चवर्गीयाणां विषये ते अनादरं प्रकटयेयुः । अनन्तरम् अस्मादृशानां महत्त्वं नितरां न्यूनं भविष्यति । सेवकवर्गे जनाः एव न भवेयुः अपि कदाचित् । अतः बुद्धस्य अन्त्यं मया करणीयम् एव' इति । एवं चिन्तयन् सः जीवकसमीपं गतवान् ।

जीवकः निम्नकुले उत्पन्नः, बुद्धस्य अनुयायी च । बौद्धमतविषये तस्य अचला श्रद्धा । सः बुद्धं 'भगवतः अवतारः' इति मन्यते स्म ।

देवदत्तः जीवकं प्रलोभयन्, तं स्वपक्षे आनेतुम् इच्छन् उक्तवान् - ''बुद्धः यत् वदति तत् मिथ्या एव । भवज्जातीयान् स्वपक्षीयान् कर्तुम् इच्छन् सः सर्वसमतां प्रतिपादयति । किन्तु वस्तुस्थितिः एवं न । किं ते भवन्तः इव जीवनं यापयितुं शक्नुयुः ? भवान् यादृशं खादति तादृशं ते खादन्ति किम् ? अहं

चिन्तयामि यत् एवं कदापि न कुर्वन्ति ते इति । यदि भवतः विश्वासः नास्ति तर्हि भवान् भोजनार्थं बुद्धं स्वगृहम् आहूय परीक्षतां तावत्'' इति । एवं वदन् सः जीवकस्य हृदये विषबीजम् आरोपितवान् । भिक्षार्थं बुद्धं निमन्त्रयितुं जीवकं प्रोत्साहितवान् च ।

जीवकः बुद्धसमीपं गत्वा प्रार्थितवान् यत् कृपया मम गृहम् आगत्य आतिथ्यं स्वीकरणीयम् इति । बुद्धः झटिति एव एतत् अङ्गीकृत्य जीवकेन सह प्रस्थितः एव । देवदत्तः गुप्तरूपेण एतत्सर्वं पश्यन् आसीत् ।

यद्यपि जीवकः बुद्धं स्वगृहम् आनीतवान्, किन्तु भिक्षां दातुं सङ्कोचम् अनुभूतवान् । 'मया यत् क्रियते तत् अनुचितम्' इति भावना तस्य मनसि उत्पन्ना ।

तदा बुद्धः उक्तवान् - ''जीवक ! मदर्थं विशेषरूपेण किमपि न सज्जीकृतम् इति सङ्कोचः मास्तु । भवान् यादृशं खादति तादृशम् एव मह्यम् अपि किञ्चित् ददातु । अद्य अहं भवतः भिक्षायाम् एव विश्वस्य आगतवान् अस्मि'' इति ।

जीवकः कम्पमानेन हस्तेन भिक्षां दत्तवान् । बुद्धः तत् सन्तोषपूर्वकं खादितवान् ।

वस्तुतः बुद्धः इतः पूर्वम् एव अस्वस्थः आसीत् । वार्धक्यकारणतः तदीया जीर्णशक्तिः कुण्ठिता आसीत् । जीवकेन बुद्धाय दत्तः मांसाहारः न तथा उत्तमः आसीत् ।

एतदनन्तरं बुद्धः जीवकम् आशिषा अनुगृह्य ततः निर्गतः । किन्तु जीवकस्य मनसि पापभीतिः अधिका जाता । अपराधिभावनया तस्य मुखं म्लानम् आसीत् । द्वारेण अन्तरितः



देवदत्तः बुद्धस्य उत्तमं व्यवहारं दृष्ट्वा आश्चर्यचकितः, आत्मनः द्रोहपूर्णस्य व्यवहारस्य विषये पश्चात्तापम् अनुभूतवान् च ।

जीवकेन दत्तस्य आहारस्य स्वीकरणेन बुद्धस्य उदरम् अस्वस्थं जातम् । सः ज्वरतापेन, महत्या उदरवेदनया च पीड्यमानः शय्याम् आश्रितवान् । दिने दिने तस्य अस्वास्थ्यं प्रवृद्धम् । तदीयः अन्तिमकालः सन्निहितः ।

बुद्धस्य शय्यायाः चतुर्षु पार्श्वेषु तदीयाः प्रमुखाः शिष्याः शिरः अवनमय्य मौनेन उपविष्टाः आसन् । तस्मिन् समये अपराधिभावेन झर्झरितः देवदत्तः जीवकेन सह तत्र आगतवान् । उभयोः अपि मुखयोः पश्चात्तापः स्पष्टं दृश्यते स्म । भयविह्वला तयोः चञ्चला दृष्टिः कथयति स्म - 'भगवन् ! क्षमायाचनार्थम् आवाम् आगतवन्तौ स्वः ।

पश्चात्तापेन दग्धौ आवां क्षाम्यतु भवान्' इति ।

बुद्धः तयोः आगमनं ज्ञातवान् । सः सावधानतया नेत्रे उन्मील्य तौ प्रेमपूर्वकं समीपम् आहूय उक्तवान् – ''भवता जीवकेन च चिन्ता न करणीया । सर्वेषाम् अपि मरणं निश्चितम् एव । भवन्तौ मम निर्वाणे सहायकौ । अतः अहं भवतोः विषये कृतज्ञः अस्मि । निर्वाणः बाह्यचक्षुषोः अतीतः कश्चन प्रकाशः । अहम् अपि तं प्रकाशं प्रति गच्छन् अस्मि । अतः अल्पः अपि खेदः न प्रदर्शनीयः'' इति ।

बुद्धस्य वचनेन देवदत्तस्य मनसि अद्भुतं परिवर्तनं जातम् । सः बुद्धस्य पादस्पर्शं कर्तुम् अपेक्षां प्रकटितवान् । बुद्धः तं समीपम् आहूय तस्य स्कन्धे हस्तं संस्थाप्य उक्तवान् – ''वत्स ! यः मानवकल्याणार्थं स्वबुद्धेः उपयोगं करोति सः एव बुद्धः । तस्य बुद्धस्य मृत्युभयं नास्ति । भवान् ज्ञातिवैरेण प्रेरितः व्यक्तिगतरूपेण द्वेषं साधितवान्, न तु धर्मस्य विरुद्धम् । धर्मस्य विरुद्धं द्वेषः अशक्यः अपि । अहम् इदानीं गच्छन् अस्मि । एतस्मिन् एव क्षणे द्वेषस्य अपि अन्तः भवतु । मत्स्थाने भवान् अस्ति इत्येव चिन्तयतु । सहोदराः आनन्दनन्दादयः राजभोगं परित्यज्य बौद्धभिक्षवः सञ्जाताः सन्ति । मानवकल्याणार्थं स्वजीवनं समर्पितवन्तः सन्ति । भवान् अपि एतेषाम् अनुसरणं करोतु । भिक्षुजीवनम् आश्रित्य सर्वत्र बौद्धसङ्घान् चालयतु । बौद्धभिक्षून् सन्मार्गे नयतु । एतदर्थं भवान् समर्थः अस्ति'' इति । एवम् उक्त्वा बुद्धः देवदत्तस्य शिरसि हस्तं स्थापयित्वा हृत्पूर्वकम् आशीर्वादं कृतवान् ।

देवदत्तः आनन्देन पुलकितः सन् नेत्रे निमील्य 'बुद्धं शरणं गच्छामि, धर्मं शरणं



गच्छामि, सङ्घ शरणं गच्छामि' इति त्रिवारम् जपित्वा उक्तवान् - ''हे बुद्धभगवन् ! मानवं देवतारूपेण परिवर्तयितुं मार्गम् उपदिशन् भवान् श्रेष्ठतमं धर्मं प्रतिपादितवान् । भवान् साक्षात् भगवान् एव'' इति । अनन्तरं सः हस्तौ योजयित्वा बुद्धं नमस्कृतवान् ।

तद्दिनं वैशाखपूर्णिमा । पूर्णचन्द्रः आकाशे विराजमानः आसीत् । पूर्वदिशातः उदितं ज्ञान-ज्योतिः इति ख्यातः बुद्धः निर्वाणं प्राप्त-वान् । पूर्णः चन्द्रः गगनतले कान्त्या शोभ-मानः परिशुद्धां कौमुदीं प्रसारयन् आसीत् ।

बुद्धस्य निर्वाणानन्तरं तेन प्रतिपादितं तत्त्वम् उपदेशसूत्राणि च बौद्धमतस्य मूलाधाराः जाताः । जनाः बुद्धं भगवतः रूपेण अवतारि-पुरुषरूपेण च पूजयन्ति स्म ।''

महर्षिः सूतः एवं बुद्धावतारस्य कथाम् उपसंहृत्य अन्तिमस्य दशमस्य च कल्क्यव-तारस्य निरूपणम् आरब्धवान् -

कृत-त्रेता-द्वापर-कलियुगानां सङ्क्रमः एव महायुगम् इति कथ्यते । महायुगस्य अन्ते कलियुगे अन्तिमे चरणे कलेः प्रभावः अत्यधिकः भविष्यति । तदा समग्रं विश्वं सङ्कटग्रस्तं भविष्यति ।

अस्मिन् युगे एकत्र 'देवः सर्वथा नास्ति' इति वादः श्रूयते । अपरत्र 'मानवः किं जीवति उत न' इति सन्देहः उत्पद्यते । तादृशः विचित्रः कालः सः । तस्मिन् काले एकता सर्वथा लुप्ता भविष्यति । वर्गभेदः, जातिकलहः, परस्परविद्वेषः, अत्याचारः, दुर्व्यापारः, हिंसा, दुर्गुणः इत्यादयः पराकाष्ठां प्राप्स्यन्ति । सज्जनानां जीवनं कष्टकरं भविष्यति । राक्षसाः



एव वरम् इति तदा जनाः चिन्तयिष्यन्ति । परस्परलुण्ठनम् एव जीवनम् इति मन्यमानाः जनाः पशुतः अपि नीचं व्यवहारं करिष्यन्ति । प्राकृतिकधर्मः अस्तव्यस्तं भविष्यति । ग्रहाणां गतिः वक्रा भविष्यति । पृथ्वी विलपिष्यति ।

एतस्मिन् अवसरे विष्णुः चिन्तयिष्यति यत् दुष्टदण्डनपूर्वकं शिष्टरक्षणे दण्डोपायात् ऋते अन्यः मार्गः नास्ति इति । अतः सः कल्कि-रूपेण भूलोकम् अवतरिष्यति । एषः एव दशमः अवतारः ।

शिवः स्वांशेन निर्मितम् एकम् अश्वं कल्केः सहायकत्वेन प्रदास्यति । स च महाश्वः कालगतेः अपि अधिकवेगेन गच्छन्, निरन्तरं श्वेतधूमं निःश्वासरूपेण त्यक्ष्यति । धूमकेतुः इव आकाशे महता वेगेन गच्छन् अन्यग्रहाणां दिशि धाविष्यति ।

एतस्य अश्वस्य उपरि उपविष्टः कल्किः

महाकारम् अतिदीर्घं तीक्ष्णं च खड्गं स्वीकृत्य दुष्टजनानां संहारार्थम् उद्यतः भविष्यति । प्रलयकालीनानां मेघखण्डानां मध्ये विलसन्त्या विद्युता निर्मितः एषः खड्गः आकाशात् भूमिपर्यन्तं स्वसामर्थ्यं प्रदर्शयन् दुष्टान् संहरिष्यति ।

अवतारपुरुषस्य कल्केः स्वरूपं योधस्य इव तिशेषकवचेन आवृतं सत् प्रकाशमानं भविष्यति । आपादमस्तकं कवचेन आवृतम् एतस्य तत् शरीरं दुष्टाः घोरं महाभयङ्करं च भावयिष्यन्ति । किन्तु शिष्टजनाः एतत् शरीरं सौन्दर्योपेतं भावयिष्यन्ति ।

विष्णोः अंशभूतः कल्किः विभिन्नेषु देशेषु विभिन्नेन रूपेण आत्मानं प्रदर्शयन् वेगेन सञ्चरिष्यति । अश्वस्य उपरि उपविश्य सञ्चरन् एषः अवतारस्य उद्देशं लीलया साधयिष्यति । कल्केः आक्रमणेन कलिपुरुषस्य प्रभावः क्षीणः भविष्यति । तीक्ष्णया धारया युक्तः कल्केः खड्गः दुष्टान् , पापिनः, अत्याचारिणः च संहरन् शिष्टजनान् रक्षिष्यति ।

पूर्वं ये ग्रहाः वक्रगतिम् आश्रितवन्तः आसन् ते सर्वे इतः परं योग्येन मार्गेण सञ्चरिष्यन्ति ।

विष्णोः अंशभूतं कल्किं भूदेवी श्रद्धया नीराजनेन पूजयिष्यति, विविधैः स्तोत्रैः विष्णुं तोषयिष्यति च । तदा ब्रह्मादिदेवताः सप्तर्षयः च पुष्पवृष्टिं कुर्वन्तः स्तुतिं करिष्यन्ति ।

कल्किः भूलोकस्य नियन्त्रणं स्वयं कुर्वन् अत्याचारान् अधर्मान् अन्यायान् च समूलं नाशयिष्यति । मानवसमाजे विद्यमानं भेदभावम् उन्मूल्य सर्वत्र एकतां प्रसारयिष्यति । तदा च एतत् महायुगं समाप्तिम् एष्यति । अपरस्य महायुगस्य शुभारम्भः भविष्यति । नवीनस्य कृतयुगस्य बीजारोपः भविष्यति च ।

तदा विष्णुः स्वकल्किरूपम् उपसंहरन् जगति सर्वत्र व्याप्तः भविष्यति । विश्वस्थितेः मूलरूपत्वेन स्थास्यति च ।

विष्णुपदस्य अर्थः - सर्वत्र सर्वदा व्याप्तः इति । कालः एव तस्य स्थितिः । महाशिवः एव तस्य परिपूर्णं स्वरूपम् । विष्णुः एव सर्वस्य आदिः, सः एव अन्तम् अपि । जगतः जन्म तत्कारणतः एव, पालनपोषणम् अपि तेन एव, अन्त्यम् अपि तेन एव ।

एवंप्रकारेण सूतमहर्षिः दशावतारकथासहितं विष्णुपुराणं समग्रतया निरूपितवान् ।





# वरत्वं गतः शापः



पूर्वं रामनारायणः नाम कश्चन निर्धनः कृषिकः आसीत् । सः अन्यस्य भूमिं कृष्यर्थं स्वीकृत्य तत्र कृषिं कृत्वा कथञ्चित् स्वस्य कुटुम्बस्य पोषणं करोति स्म । तस्य मनसि इच्छाद्वयम् आसीत् – देशाटनं करणीयम् इति, भूरिभोजनं करणीयम् इति च । किन्तु सामान्यः कृषिकः सः स्वस्य एताम् इच्छां पूरयितुं सर्वथा अशक्तः आसीत् ।

कदाचित् तस्य मनसि विचारः आगतः यत् राजधान्यां प्रचलन् वसन्तोत्सवः वा मया द्रष्टव्यः एव इति । अतः सः मित्रेण केशवेन सह राजधानीं प्रति प्रस्थितवान् । आदिनं प्रयाणं कृत्वा तौ रात्रिसमये किञ्चन अरण्यं प्राप्तवन्तौ । रात्रौ कुत्र वासः करणीयः इति यावत् चिन्तनम् आरब्धं तावता दूरे एकं मन्दिरं दृष्टं ताभ्याम् । वृक्षस्य अधः वासात् अपि मन्दिरे वासः क्षेमाय इति विचिन्त्य रामनारायणः मित्रम् अवदत् – ''केशव ! एतां रात्रिम् आवां मन्दिरे वसन्तौ यापयाव । मन्दिरस्य देवता आवयोः रक्षणं कुर्यात्'' इति ।

तदा केशवः अवदत् – ''भोः, एतत् तु चण्डमुण्डायाः मन्दिरम् । एषा क्रोधस्वभावा । दिने सर्वत्र सञ्चारं कृत्वा रात्रौ सा मन्दिरं प्रत्यागमिष्यति । तस्मिन् समये यदि मन्दिरे कोऽपि दृश्यते तर्हि तस्मै शापं ददाति सा । अतः अत्र वासः न क्षेमाय'' इति ।

''देवी कुपिता भवेत् इत्यादिकं सर्वं किंवदन्तीमात्रम् । अहं तु अग्रे एकं पदम् अपि स्थापयितुं न शक्नोमि । अतः अत्रैव मम वासः'' इति वदन् मन्दिरं प्रविष्टवान् रामनारायणः । केशवः तु एकाकी एव अग्रे अगच्छत् ।

मन्दिरं प्रविष्टवान् रामनारायणः अल्पे एव काले गभीरां निद्रां प्राप्तवान् । मध्यरात्रसमये केनचित् क्रियमाणस्य कशाप्रहारस्य कारणतः

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



तेन जागरणं प्राप्तम् । यदा नेत्रे उन्मीलिते तदा रक्तनेत्रा कशाहस्ता देवी चण्डमुण्डा तेन पुरतः दृष्टा ।

देवी क्रोधेन तम् अपृच्छत् – ''अये ! मूर्ख ! कः भवान् ? मम अनुज्ञां विना एव एतस्मिन् मन्दिरे शयनं कुर्वतः भवतः कियत् धाष्ट्र्यम् ?'' इति ।

तदा रामनारायणः देवीं प्रणम्य अवदत् – ''मातः । अहं कश्चन निर्धनः कृषिकः । राजधानीं प्रति प्रस्थितः अहं नितरां श्रान्तः आसम् । घोरान्धकारः अपि आसीत् । एतादृशे अवसरे अग्रे गमने मम धैर्यं न आसीत् । अतः मया अत्र शयनं कृतम् । प्रातःकाले अहम् इतः निर्गमिष्यामि'' इति ।

''यदि अहं भवन्तं क्षान्तवती स्यां तर्हि अन्ये अपि जनाः मन्दिरे वासाय धैर्यं कुर्युः । तदा एतत् मन्दिरं धर्मशालायेत । अतः मया शापः दीयते एव । भवान् कृष्या खलु जीवति ? अतः एतस्मिन् वर्षे भवता स्पृष्टं जलं यस्य सस्यस्य उपरि पतति तत् सस्यं मृतं भविष्यति । एषः मम शापः'' इति उक्त्वा देवी ततः अदृश्यतां गता ।

'एतस्मिन् वर्षे मया कृषिः कथं करणीया' इति चिन्तयन् रामनारायणः राजधानीं गतवान् ।

तस्मिन् वर्षे वसन्तोत्सवः महता वैभवेन आचरितः । तदवसरे देशस्य नानाकोणेभ्यः आगताः जनाः राजानं स्वसमस्यां निवेदितवन्तः । सर्वेषां काचित् समाना समस्या आसीत् । कुतृणविशेषः कश्चन समग्रे देशे सस्यानि शक्तिहीनानि करोति स्म । समूलम् उत्पाटितम् अपि तत् सस्यं पुनः उत्पद्यते स्म । तस्य नाशनं सर्वथा अशक्यम् आसीत् । एतत् श्रुतवान् रामनारायणः राजानं प्रणम्य अवदत् – ''महाराज ! यदि भवतः अनुज्ञा स्यात् तर्हि वर्षाभ्यन्तरे अहम् एतानि सस्यानि समूलं नाशयिष्यामि समग्रे देशे'' इति ।

राजा रामनारायणस्य कथनस्य परीक्षाम् अकरोत् । तदीयं कथनम् अवितथम् इति यदा सिद्धं तदा सः जनानां साहाय्याय योग्यां व्यवस्थां कृतवान् ।

रामनारायणः जनैः सह ग्रामं ग्रामं गच्छति स्म । कृष्यारम्भतः पूर्वं स्वस्य हस्तेन जलप्रोक्षणं करोति स्म । तस्मात् कृषिक्षेत्रे स्थितानि सर्वाणि कुतृणसस्यानि बीजानि च मृतानि भवन्ति स्म ।

एतेन प्रकारेण रामनारायणस्य इच्छाद्वयम् अपि पूर्णम् । वर्षाभ्यन्तरे सः समग्रे देशे

प्रयाणम् अकरोत् । सर्वत्र सः आदरं, सत्कारं, भोजनं च प्राप्तवान् । राजा तस्मै विशालां भूमिम् उपायनरूपेण दत्तवान् अपि ।

अनन्तरवर्षे अपि वसन्तोत्सवे भागं ग्रहीतुम् इच्छन् रामनारायणः राजधानीं गच्छन् चण्ड-मुण्डामन्दिरे एव रात्रौ वासं कृतवान् । एतदवसरे अपि मध्यरात्रसमये देवी प्रत्यक्षा जाता ।

रामनारायणः तां प्रणम्य अवदत् - ''देवि ! भवत्याः शापस्य कारणतः मम इच्छाद्वयं पूर्णं जातम् । देशस्य उपकारः अपि सिद्धः'' इति ।

तत् श्रुत्वा क्रुद्धा चण्डमुण्डा - ''अये मूर्ख ! मयि क्रोधं जनयितुम् एव भवता अत्र आगतम् । भवान् यत्र पदं स्थापयति तत्र मानवाकारोन्नतः गर्तः निर्मितः भवतु'' इति शापं दत्त्वा ततः अदृश्या अभवत् ।

'मया इतःपरं कुत्रापि पादाभ्यां गन्तुं न शक्यते' इति अवगतवान् रामनारायणः । प्रातःकालपर्यन्तम् अपि निद्राम् अप्राप्नुवन् सः चिन्तनम् अकरोत् - एतस्मात् शापात् देशस्य हितं कथं साधयितुं शक्येत इति । कश्चन उपायः स्फुरितः तस्य मनसि । प्रातः सः तेन मार्गेण गच्छतां यात्रिकाणां द्वारा राज्ञे वार्तां प्रेषयित्वा शिबिकाम् आनाय्य तस्याम् उपविश्य राजधानीं गतवान् । राजानं दृष्ट्वा शापवृत्तान्तं निवेद्य सः एतस्य लाभस्वीकाराय आत्मना चिन्तितम् उपायम् अपि असूचयत् ।

एतदनुगुणं राज्ये यत्र यत्र कुल्या निर्मातव्या आसीत् तत्र सर्वत्र सुधाचूर्णेन अङ्कनं कृतम् । रामनारायणः तेषु तेषु प्रदेशेषु पादाभ्याम् अगच्छत् । तेन सर्वत्र पुरुषप्रमाणिका कुल्या निर्मिता अभवत् । यत्र पादाभ्यां गमनस्य



आवश्यकता न भवति तत्र रामनारायणः शिबिकया प्रयाणं करोति स्म । यत्र यत्र सः गच्छति तत्र सर्वत्र राजोचिता व्यवस्था, रजतस्थालिकायां भोजनम् इत्यदिकं भवति स्म ।

एवं रामनारायणेन यः शापः प्राप्तः सः द्वितीयवारम् अपि देशोपकाराय एव जातः । अल्पेन एव व्ययेन देशे कुल्याः निर्मिताः जाताः । तस्मात् देशे सस्यसमृद्धिः प्रवृद्धा । रामनारायणः तु द्वितीयवारम् अपि देशे सर्वत्र अटितुम् अवसरं, आतृप्ति स्वादु भोजनं च प्रतिदिनं प्राप्तवान् ।

तृतीये अपि वर्षे वसन्तोत्सवं गच्छन् रामनारायणः रात्रौ चण्डमुण्डामन्दिरे एव वासं कृतवान् । मध्यरात्रसमये देवी यथापूर्वं प्रत्यक्षा जाता ।

रामनारायणः करौ संयोज्य प्रणम्य देवीम् अवदत् - ''भगवति ! भवत्याः शापस्तु अपूर्वः एव । तस्य कारणतः पुनरपि मया देशाटनभाग्यं प्राप्तम् । उत्कृष्टस्य भोजनस्य स्वादः प्रतिदिनम् आस्वादितः । प्रजाहितरूपं कार्यं कृत्वा किञ्चित् पुण्यं सम्पादितम् अपि । भवती कृपया माम् आशिषा अनुगृह्णातु । अहं भवत्याः दैनन्दिनपूजायै यथायोग्यं व्यवस्थां करिष्यामि'' इति ।

एतत् श्रुतवती क्रुद्धा चण्डमुण्डा पुनरपि शापं दत्तवती - ''अये मूर्ख ! इतः पूर्वं द्विवारं मम अनुज्ञां विनैव अत्र वासं कुर्वता भवता मम शापः प्राप्तः । द्विवारम् अपि भवता मम शापस्य अवहेलनम् अपि कृतम् । भवतः देशाटनं परोपकारः च एतदवसरे कथमपि सफलतां न याति । यः भवतः दृष्टिपथम् आयाति सः भस्मसात् भवतु ! आजीवनं भवता नेत्रे वस्त्रपट्टिकया बद्ध्वा एव स्थातव्यं भविष्यति'' इति ।

रामनारायणः स्वस्य उष्णीषेण मुखम् आवरय्य समग्रां रात्रिं यावत् अचिन्तयत् । प्रातः सः मन्दिरात् निर्गत्य नेत्रबन्धनम् अपनीय मन्दिरम् अपश्यत् । अनन्तरक्षणे एव मन्दिरं भस्मसात् जातम् । तेनैव सह शापः अपि अपगतः ।

अनन्तरकाले रामनारायणः तत्रैव एकां धर्मशालां निर्मापितवान् । तेन यात्रिकाः बहुधा उपकारं प्राप्तवन्तः ।



# सङ्गीतनृत्ययोः उत्सवपरम्परा

प्रतिवर्षं डिसेम्बर्मासस्य मध्यभागतः सङ्गीतनृत्यमहोत्सवः आरप्स्यते तमिळुनाडुराज्ये । तदा श्रोतारः द्रष्टारः च श्रवणनयनयोः आनन्दम् अनुभवन्ति । चेन्नैनगरे प्रचलिष्यमाणे मासावधिके **मार्गशिपर्वणि** द्विसहस्राधिकाः सङ्गीतविद्वांसः नृत्यपटवः च भागं वहन्ति । विंशत्यधिकेषु विविधेषु रङ्गस्थलेषु ते त्रिशताधिकान् प्रकारान् उपस्थापयन्ति । जनवरीमासस्य मध्यभागे त्यागराजवर्यस्य आराधन-महोत्सवः प्रचलति । सः सङ्गीतक्षेत्रस्य त्रिमूर्तिषु अन्यतमत्वेन ख्यातः । **त्यागराजाराधनोत्सवः** तदीये जन्मस्थले तञ्जावूरु-जनपदे तिरुवय्यारुक्षेत्रे प्रचलति । तत्र कर्णाटक-सङ्गीतप्रकार-सम्बद्धानि शतशः गीतानि सामूहिकतया गीयन्ते ।



महाबलिपुरे **मामल्लपुरोत्सवः** अपि एतस्मिन् एव काले आरप्स्यते । भरतनाट्यं, कूचिपुडि, ओडिस्सि, कथक, कथक्कलि इत्यादयः नृत्यप्रकाराः अत्र मन्दिरपृष्ठभूमिकायाम् अनावृते सार्वजनिकमण्डपे प्रचलिष्यन्ति । फेब्रवरीमासस्य मध्यभागे उत्सवोऽयं समाप्तिम् एष्यति । तदनन्तर- काले चिदम्बरक्षेत्रे महा-नटराजस्य सर्वपूज्यस्य भगवतः शिवस्य मन्दिरे **नाट्याञ्जल्युत्सवः** प्रचलिष्यति । नृत्यभङ्ग्या युक्तस्य भगवतः नटराजस्य कांस्यमूर्तिः देशविदेशीयानां पर्यटकानां चित्तम् आकर्षति आवर्षम् । महाशिवरात्रिपर्वकाले एतस्य उत्सवस्य समाप्तिः । मन्दिरस्य गर्भगृहे भगवतः सन्निधौ नृत्यस्य प्रदर्शनात् तदीयः शुभाशीर्वादः प्राप्यते इति भावयन्ति समग्रात् देशात् आगताः नृत्यविशारदाः।

मामल्लपुरोत्सवं नाट्याञ्जल्युत्सवं च तमिळुनाडीया प्रवासोद्यमसंस्था आयोजयति ।

# कृन्तकस्य पुच्छं कुतः लघु ?

चिरोकीनामकः कश्चन देशः । तत्र स्थितानां जनानां विश्वासः यत् प्राणिनः सर्वेऽपि इदानीं यथा सन्ति तथा पूर्वं न आसन्, अपि तु इतोऽपि बलशालिनः, उन्नताः, अधिकरूपवन्तः च आसन् इति । मनुष्यैः सह तेषां व्यवहारोऽपि इतोऽपि अधिकः आसीत् इति तेषाम् अभिप्रायः । तस्य देशस्य कथा एषा ।

कृन्तकनामकः कश्चन मूषकसदृशः प्राणी आसीत् । किन्तु बृहत् आकृतिः तस्य । कदाचित् महती बुभुक्षा सञ्जाता तस्य । किन्तु बिलात् बहिः गन्तुं तस्य भयम् आसीत् । 'मां खादितुम् अन्ये प्राणिनः समयं निरीक्षमाणाः भवन्ति' इति चिन्तयति स्म सः । बिले सङ्गृहीतानि खाद्यवस्तूनि समाप्तानि आसन् । अतः इदानीम् आहारार्थं तेन कापि व्यवस्था करणीया एव आसीत् ।

'आहारान्वेषणं कर्तुम् अहं गृहात् बहिः यदि गच्छेयं तर्हि गृहे प्राप्यमाणं रक्षणं तत्र न लभ्यते । बहिः अहमेव अन्येषां प्राणिनाम् आहारः भवेयम् । तादृशेभ्यः प्राणिभ्यः रक्षणं बहिः नितरां कष्टाय एव' इति क्षणकालम् अचिन्तयत् सः ।

झटित्येव तस्य मनसि स्वस्य विचारविषये एव हासः आगतः । यतः सः अनेकवारं प्राणापायात् रक्षितः आसीत् । अपायात् स्वं रक्षितुं सः समर्थः आसीत् एव ।

एषः अंशः यदा मनसि आगतः तदा तस्य उत्साहः प्रवृद्धः । सः बिलस्य द्वारसमीपम् आगत्य तत्रैव किञ्चित्कालं स्थितवान् । ततः शिरः बहिः प्रसार्य चतसृषु दिक्षु दृष्टिं प्रसारितवान् । सर्वत्र प्रशान्तता आसीत् । तत् दृष्टवतः तस्य उत्साहः प्रवृद्धः । सः बिलात् बहिः आगतः । सर्वत्र वृक्षाः दृश्यन्ते स्म ।

सः कृन्तकः आहारम् अन्विष्यन् इतस्ततः अटनम् आरब्धवान् । तेन रुचिकरं मूलकं खननेन प्राप्तम् । मार्गे लब्धान् कृमिकीटादीन् अन्यान्



च सः सहसा गृहीतवान् । मध्ये मध्ये स्वबिलात् कियद्दूरं मया आगतमिति पश्यन् एव भवति स्म सः । यतः बिलसमीपे एव स्थातुं सः इच्छति । कोऽपि अपायः आगतः चेत् शीघ्रमेव बिलं प्रवेष्टुं शक्यं भवेत् इति तस्य चिन्तनम् आसीत् ।



कस्यचित् मूलस्य खनने कृन्तकः यदा मग्नः आसीत् तदा तेन केषाञ्चित् पादध्वनिः श्रुतः । शिरः उन्नमय्य सः अपश्यत् । भीतस्य तस्य शरीरे कम्पनम् आरब्धम् । यतः वृकाणां समूहः एव तत्र उपस्थितः आसीत् । 'मम जीवनस्य अन्तिमः क्षणः आगतः एव इदानीम्' इति सः अचिन्तयत् ।

अपरक्षणे एव तस्मात् विचारात् मुक्तः सः 'एतस्मात् अपायात् कथं मया मोक्षः प्राप्तव्यः' इति चिन्तनम् आरब्धवान् ।

''अये सुहृदः!'' इति तान् वृकान् सम्बोध्य सः हसन् पुनः उक्तवान् - ''शुभमस्तु भवतां सर्वेषामपि । भवद्भिः अद्य स्वादु भोजनं लब्धम् अस्ति !'' इति ।

एतत् श्रुत्वा वृकाः आश्चर्यचकिताः । यतः एतावत्पर्यन्तं कदापि तैः एतादृशं वचनं न श्रुतम् आसीत् । आहारत्वेन प्राप्तः प्राणी कदापि एवं निश्चिन्ततया स्थितः न दृष्टः आसीत् तैः । अतः ते सर्वेऽपि नायकवृकं दृष्टवन्तः ।

'धन्यवादाः' इति वदन् नायकवृकः अग्रे आगत्य उक्तवान् - ''क्षणात् ऊर्ध्वं न जीविष्यति भवान् । यतः वयं सर्वे बुभुक्षिताः स्मः'' इति ।

''दयां दर्शितवते भगवते धन्यवादसमर्पणं कर्तुं निमेषद्वयमपि न दीयते किम् ? अहं जानामि एव यत् वृकेषु, तत्रापि विशेषेण सभ्येषु वृकेषु, कश्चन गाननृत्यक्रमः अस्ति इति'' इति अवदत् कृन्तकः ।

''किन्तु अस्मासु कस्यापि कण्ठः न मधुरः'' इति वृकनायकः उक्तवान् ।

वृकान् पश्यन् कृन्तकः अवदत् - ''अलं चिन्तया । अहं गायामि । भवन्तः नृत्यन्तु । अहम् एकैकस्य कृते एकैकं गीतं गायामि । अहं बहून् रागान् जानामि । अहं यावन्ति गीतानि जानामि तेषु सर्वोत्कृष्टानि सप्त गीतानि गायामि । एकैकं गीतम् एकैकस्य वृक्षस्य अधः उपविश्य गायामि । भवन्तः सर्वेऽपि नृत्यन्तु । गानसमये भवद्भिः विपरीतगत्या पदानि पृष्ठतः स्थापनीयानि । गीतसमाप्तिपर्यन्तं भवतां पदस्थापनं पृष्ठतः एव भवेत् । मम अन्तिम-गीततगानपर्यन्तम् अपि भवद्भिः सर्वैः एवम् एव करणीयम् । सप्तमं गीतं भगवन्तं सन्तोषयितुम् । यदा मम सर्वाणि गीतानि समाप्यन्ते तदा झटिति भवन्तः मां खादितुम् अर्हन्ति'' इति ।



तस्य वचनं वृकनायकः अङ्गीकृतवान् ।

कृन्तकः पार्श्वे स्थितस्य वृक्षस्य समीपे सुखेन उपविश्य वृकनायकं पश्यन् उक्तवान् - ''आर्य ! प्रथमम् एतत् गीतम् भवतः सम्माननाय'' इति । एतत् श्रुत्वा वृकनायकः तृप्त्या हसितवान् ।

कृन्तकः गीतम् आरब्धवान् । वृकाः सानन्दं नर्तनम् आरभन्त ! ते विशाले स्थले नृत्यन्तः पृष्ठतः गच्छन्तः गीतं मुखेन वदन्तश्च आसन् । तेषां दृष्टिः कृन्तकस्य उपरि आसीत् एव । यतः तेषां सन्देहः आसीत् यत् एषः कृन्तकः केनापि उपायेन अस्मान् वञ्चयितुम् अर्हति इति । किन्तु कृन्तकः गीतसमाप्तिपर्यन्तं तस्य वृक्षस्य अधः एव उपविष्टः आसीत् ।

एकं गीतं समाप्तम् । अपरं गीतं वक्तुं सः कृन्तकः अन्यस्य वृक्षस्य अधोभागं प्राप्तवान् । तस्य वृक्षस्य अधः उपविश्य अन्यत् गीतम् आरब्धवान् च ।

इदानीं वृकाः कृन्तकविषये विश्वासं प्राप्तवन्तः आसन् । एकैकस्य गीतस्य समाप्तेः अनन्तरं सः कृन्तकः अन्यं वृक्षम् आश्रित्य तत्र उपविश्य अपरं गीतं गायति स्म । वृकाः अपि पूर्वोक्तवचनानुगुणं नर्तनं कुर्वन्ति स्म । कृन्तकस्य मुखे भयस्य चिह्नम् अपि न आसीत् । पलायनं कर्तुं कमपि प्रयत्नं सः न कृतवान् । अनेन कृन्तकविषये वृकाणां विश्वासः इतोऽपि प्रवृद्धः । षष्ठं गीतं समाप्तम् । इदानीम् अन्यवृक्षसमीपं गन्तुं सिद्धः अभवत् सः कृन्तकः । तस्य वृक्षस्य समीपे स्थिते बिले एव तदीयः वासः आसीत् । बिलद्वारं कुत्रास्ति इति किञ्चित् सावधानं दृष्टवान् सः । 'मया यथा चिन्तितं तथैव यदि सर्वं सम्पन्नं भवेत् तर्हि अहं सुरक्षितं बिलं प्रविशेयम्' इति चिन्तयन् एव सः अपरस्य वृक्षस्य समीपं गतवान् ।

ततः सः वृकाणां समूहं दृष्ट्वा अवदत् - ''इदानीम् एकगीतमात्रम् अवशिष्टम् । अन्तिमं गीतं भगवतः प्रशंसापरम् अस्ति'' इति ।

''भवान् वस्तुतः अपि मनोरञ्जकः इत्यत्र नास्ति सन्देहः । यदि वयं बुभुक्षिताः न स्याम तर्हि भवतः सजीवगमनम् अनुमतवन्तः स्याम अपि । किन्तु किं करवाम, बुभुक्षा अस्मान् असहायान् करोति'' इति अवदत् वृकनायकः ।

''तस्याः बुभुक्षायाः निवारणाय अव-

शिष्टाः सन्ति द्वित्राः एव क्षणाः । यदा मम सप्तमं गीतं समाप्तिम् एष्यति तदा मां भवन्तः खादितुम् अर्हन्ति'' इति उक्तवान् कृन्तकः । सः उच्चैः उद्घोषितवान् – ''सप्तमं गीतं गायामि । सर्वे नृत्यं कर्तुं सन्नद्धाः भवन्तु'' इति ।

''अस्तु'' इति सर्वैः वृकैः अङ्गीकृतम् ।

कृन्तकः सप्तमं गीतम् आरब्धवान् । नृत्यन्तः वृकाः सर्वे कृन्तकतः दूरं गच्छन्तः आसन् । सर्वत्र सङ्गीतमयं वातावरणम् । सङ्गीतस्वराः नैकविधाः आसन् । गीतानुगुणं नृत्यन्तः वृकाः अपि वेगेनैव पादान् प्रक्षिपन्तः आसन् । तदा झटिति गीतं स्थगितम् । ''अहं सिद्धः अस्मि'' इति कृन्तकस्य उच्चध्वनिरपि श्रुतः ।

किन्तु एकदैव वृकाणां पादगतिः न स्थगिता, यतः वेगेन पादप्रक्षेपणं क्रियमाणम् आसीत् इति कारणात् कश्चन समयः अपेक्षितः अभवत् स्थिरताप्राप्त्यै । एतम् अवसरमेव प्रतीक्षमाणः कृन्तकः महता वेगेन ततः धावितवान् । इतः पूर्वं कदापि तेन एतावता वेगेन न धावितम् आसीत् ।

वृकैः यावत् तदीयं पलायनं ज्ञातं तावति एव काले कृन्तकः बिलं प्रवेष्टुम् उद्युक्तः आसीत् अपि । सः स्वशिरः अन्तः प्रवेशयितुं समर्थः जातः आसीत् । तावता तदीयं पुच्छं दन्तैः दृढतया गृहीतवान् वृकनायकः । कृन्तकः अन्तः गन्तुं प्रयासम् अकरोत् । किन्तु वृकः स्वस्य समग्रं बलं प्रयुज्य आकर्षन् आसीत् इत्यतः कृन्तकस्य प्रयत्नः सफलः न जातः । सः पुरोभागीयाभ्यां पादाभ्यां बिलस्य भित्तिं दृढतया गृहीतवान् आसीत् । अतः वृकः तं बहिः आक्रष्टुम् अपि न शक्नोति स्म । किञ्चित्कालं यावत् उभयोः अपि आकर्षणं प्रवृत्तम् । अन्ते वृकः समग्रां शक्तिं प्रयुज्य आकृष्टवान् । तदा कृन्तकस्य पुच्छस्य कश्चन भागः कर्तितः जातः । तस्मात् वृकः भूमौ पतितः ।

''कृन्तकः अस्मान् वञ्चितवान्'' इति वृकैः उक्तम् ।

''वयमेव अत्र कारणीभूताः'' इति वृकनायकः विषादेन उक्तवान् ।

कृन्तकः धावन् बिलस्य अन्तः गतः । किञ्चित्कालं विश्रान्तिं स्वीकृत्य सः अपश्यत् – 'मम पुच्छस्य का गतिः जाता' इति । पुच्छं लघु सञ्जातम् आसीत् । तथापि तत् सुन्दरमेव दृश्यते स्म ।

'लघुना पुच्छेन अहम् इतोऽपि सुरक्षितः एव अभवम्' इति चिन्तयन् सन्तोषम् एव प्राप्तवान् कृन्तकः । तदारभ्य कृन्तकानां पुच्छं लघु एव अभवत् ।



# आर्यः

28

## अज्ञातराजकुमारस्य रहस्यम्

वीरसिंहः जब्बरसिंहः च प्रतिवेशिराज्ये अमृतपुरे आश्रयं प्राप्तवतां विद्रोहिणां ग्रहणार्थं हठात् आक्रमणाय उद्युक्तौ भवतः । वसन्तः पर्वतखातप्रदेशे तेषां संहाराय योजनां करोति । जब्बरसेनः हतः भवति । वीरसिंहः सेनया पृथग्भूतः सन् एकाकी भवति ।

चित्रम् - गान्धि-अय्य:


















वसन्तः वीरसिंहस्य आक्रमणात् स्वस्य रक्षणं करोति ।



उभयोः तस्मिन् युद्धे क्वचित् एकस्य प्राबल्यं, पुनः अन्यस्य ।...



अन्ते वसन्तः वीरसिंहस्य हस्तात् खड्गं पातयति ।



वीरसिंहः समतोलनविहीनः सन् अधः पतति

वीरसिंह ! स्वीक्रियताम् एतत् ।

वसन्त ! अलं संहारेण

वसन्तः प्रहारात् पूर्वम् एव केनचित् कृतम् आह्वानं शृणोति ।


जयानन्दः अग्रे आगच्छति ।
हिंसा अस्माकं धर्मः न वसन्त !


वीरसिंहः नितरां दिग्भ्रान्तः ।
किं भवत् अस्ति मम ?


कश्चन महाप्रकाशः उद्भूतः । ततः कनकदुर्गायाः आकृतिः दृश्यते । मन्दिरस्था स्वर्ण-प्रतिमा मानवरूपं धृत्वा आगता इति भाति ।


अनन्तरक्षणे आकृतिः अदृश्यतां गच्छति ।


... तस्मिन् स्थाने शान्तिदेवसदृशी काचित् आकृतिः प्रकटतां याति । वीरसिंहः स्वस्य अश्वस्य उपसर्पणाय प्रतिगमनम् आरभते ।


वीरसिंहः केनचित् घट्टितः सन् पतितः, लुठन् किञ्चिद्दूरं गतः च । आत्मानं परितः स्थितानां वसन्तपक्षीयाणां सशस्त्राणां स्वयंसेवकानाम् अट्टहासः तेन श्रूयते ।


सः स्वस्य पुरतः जयानन्दं पश्यति ।
वीरसिंह ! यदा राज्ये राजकुमारस्य जन्मदिनस्य आचरणं प्रचलति स्म तदा भवता शान्तिदेवस्य सिंहासनं स्वायत्तीकृतम् । किम् एतत् शौर्यद्योतकम् आसीत् ?

सहजतया एव प्रजाभिः भवतः विरोधः कृतः ।

जयानन्दः तस्य पुरतः अपराधानाम् आवलीम् एव उपस्थापयति ।

भवता ते विद्रोहिपदेन निर्दिष्टाः । राज्यात् बहिः प्रेषणाय भवान् तान् प्रचोदितवान् ।

वीरसिंहः प्रतीपतया पदानि स्थापयन् खाताग्रस्य अन्तिमं भागं प्राप्नोति ।

प्रजाः किं बुभुक्षया मृताः भवेयुः इति भवता चिन्त्यते ?

तथैव भवता अस्माकम् अरण्यस्य तद्वासिनां च नाशनाय अपि प्रयासः कृतः ।

पृष्ठतः गभीरः खातः अस्ति इति तेन न ज्ञातम् ।

पृष्ठतः पदं स्थापयन् वीरसिंहः गभीरे खाते हठात् पतति ।

हा ऽऽ अहोऽ !

वसन्तः तदनुयायिनः च सन्तोषं प्राप्नुवन्ति ।

प्रकृतिः एव योग्यं दण्डं दत्तवती । अत्र अस्माकं हस्तः मलिनः न जातः । गच्छाम तावत्, इतोऽपि करणीयानि कार्याणि बहूनि सन्ति ।

अनुवर्तते

# पृच्छोऽयं भवताम् पृच्छोऽयं भवताम्

## भवदर्थं विज्ञानम्

## मनुष्यस्य महत् अङ्गम्



मनुष्यस्य यकृत् मानवशरीरे विद्यमानं बृहत् मांसलम् अङ्गम् । तत् मानवशरीरस्य रस-क्रियागारम् इत्यपि कथ्यते । तच्च अङ्गम् उदरदेशस्य दक्षिणतः शरीरमध्यदेशात् अधः च भवति । तत् यकृत् पार्श्वास्थ्ना आवृतं सत् रक्षितं तिष्ठति ।

एतदङ्गं बाह्यस्पर्शेन ज्ञातुम् अशक्यम् । परन्तु यदि रोगेण यकृत् स्फीतं भवति, तर्हि पार्श्वास्थ्नः पृष्ठतः स्पर्शेन तत् ज्ञातुं शक्यम्, यदि उदरम् अन्तः नीयेत ।

यकृतः प्रमुखं कार्यद्वयं - नूतनानां रसानां संयोजनं, विषस्य दुर्बलीकरणं चेति । विज्ञानिनः वदन्ति यत् वस्तुतः यकृत् पञ्चशताधिकानि कार्याणि करोति इति । यकृतः प्रमुखाणि कार्याणि - मेदसः नाशः, शर्कराशस्य ग्लैकोजेन्रूपेण परिवर्तनम् इत्यादीनि । यकृत् कोलेस्ट्राल् अपि उत्पादयति ।

## भवतां परिसरः

## मण्याकारकं बीजम्

आ प्राचीनकालात् अपि 'मणि'बीजानि मनुष्याणाम् अवधानम् आकर्षन्ति सन्ति । तानि प्राचीने काले आभरणादीनि शोभाजनकानि वस्तूनि निर्मातुम् उपयुज्यन्ते स्म । सामान्यतः मणयः शिलया काचकेन प्लास्टिकद्रव्येण वा निर्मीयन्ते । किन्तु सस्यबीजात् अपि तत् निर्मितं भवेदिति सर्वे न जानन्ति । मण्याकारकस्य बीजस्य सस्यस्य नाम 'जाब्स्टियर्स्' इति । अनेन सस्येन बैबल्स्थात् किञ्चन पात्रात् एतन्नाम प्राप्तम् । तेन पात्रेण (जाब्) महती अश्रुधारा विमुक्ता इति श्रूयते । किन्तु केथोलिक्प्रार्थनकाराः तु मेर्याः अश्रु एतदिति अभिप्रयन्ति ।

अस्य सस्यस्य बीजस्य रूपं सुसंस्कृतम् । उभयत्र रन्ध्रयुक्तश्च भवति । एतानि बीजानि अश्रुबिन्दव इव दृश्यन्ते । सामान्यतः सर्वमणिगुणयुक्तं भवति एतद्बीजम् ।

एतत् सस्यं मार्गपार्श्वे प्ररोहति । आपाततः दर्शनेन एतत् कुतृणम् इव एव दृश्यते । इदं बीजं मौक्तिकश्वेतवर्णयुक्तं भवति ।



# पठ्यतां भवताम् पठ्यतां भवताम्

## भवन्तः जानन्ति किम् ?

### मशकनिवारणाय औषधम्



निद्रायाः भङ्गस्य बहूनि कारणानि भवितुम् अर्हन्ति । पक्षिणां कलरवः अपि तत्र अन्यतमं कारणम् । अपरं कारणं भवति मशकानां निनादः । मशकः कर्कशसङ्गीतं कर्णसमीपे गायन् तीक्ष्णतया दशन् कण्डूतिं वेदनाश्च यदा जनयति तदा उत्थानं भवति एव । एतेषां मशकानां निरोधनाय बहूनि वस्तूनि विपण्याम् उपलभ्यन्ते ।

देहलीस्थायाः ऐ.ऐ.टि.संस्थायाः संशोधकाः मशकनिवारणार्थं किञ्चन उपायम् अन्विष्टवन्तः सन्ति । 'पेप्परमिण्ट्'नामकात् सस्यात् पेप्पर्मिण्ट्तैलाच्च मशकाः दूरे स्थापयितुं शक्याः इति ते संशोधनात् ज्ञातवन्तः सन्ति । अनाफिलिस्नामकस्य मलेरिया-रोगजनकस्य मशकस्य उपरि अपि एतत् प्रभावं जनयति इति श्रूयते ।

## अभिवर्ध्यतां ज्ञानशक्तिः

मासेऽस्मिन्
सङ्गीतम् अधिकृत्य
भवन्ति प्रश्नाः



१. दक्षिणभारतीयस्य शास्त्रीयसङ्गीतस्य 'कर्णाटक-सङ्गीतम्' इति नाम कः कदा दत्तवान् ?

२. राज्ञः अकबरस्य आस्थानगायकः कः आसीत् ? कीदृशं सङ्गीतप्रकारं सः प्रसिद्धिम् आनीतवान् ?



३. कर्णाटकसङ्गीतस्य त्रिमूर्तयः इति के त्रयः आद्रियन्ते ?



४. 'घजल्'गानं भारते यवन-शासकैः प्रसिद्धीकृतम् । तस्य उत्पत्तिः कुत्र जाता ? प्रसिद्धा 'घजल्'गायिका का ?

५. तमिळुनाडुराज्ये प्रसिद्धानां भगवतः शिवस्य प्रशंसापराणां शास्त्रीयसङ्गीतवत् आभासमानानां भक्ति-गीतानां नाम किम् ?



(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



NARAYANAMURTHY TATA



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





'अक्टोबर्'मासस्य शीर्षिकाप्रेषकः -

**त्यागराजन्**

अडयार् बुक् शाप्, थियासोफिक्ल् सोसैटी

**चेन्नै - ६०० ०२०**

**प्रत्यक्षसर्पात् यो न बिभेति,**
**कृत्रिमकृत्यात्स बिभेति कथम् ?**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. विद्यारण्यः, १५ शतके । सः विजयनगरसाम्राज्यस्य प्रधानमन्त्री आसीत् ।

२. तानसेनः । 'द्रुपद'प्रकारम् ।

३. त्यागराजः, श्यामशास्त्री, मुत्तुस्वामिदीक्षितः च ।

४. पर्षिया(इरान्)देशे । बेगम् अकबर् ।

५. थेरवम् ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

